श्रीजिनदत्तसूरिपुस्तकोद्धारफण्डे ग्रन्थाङ्कः ३१

श्रीमदकब्बरसुरत्राणमुपदिश्याषाढीयाष्टाह्निकाऽमारिप्रवर्त्तापकसमादृतकठोरतरसाधुक्रियासमाचारश्रीसाहिप्रदत्तयुगप्रधानबिरुदधारकश्रीजिन-चन्द्रसूरिवरविनेयाग्रणीमहोपाध्यायश्रीजयसोमगणिशिष्यवाचनाचार्यश्रीगुणविनयगणिनिरचितं निन्हवानन्दमखरीपूर्वजधर्मसागरीयेर्यापथिकीपट्त्रिंशिकाद्यन्तर्गतोत्सूत्रोद्घाटनकुलकस्योत्तरात्मकं—

# धर्मसागरीय-उत्सूत्रखण्डनम्

प्रकाशकः—

श्री...[illegible]सूरिज्ञानभाण्डागारस्य कार्यवाहकः पानाचन्द भगुभाइ झवेरी. गोपीपुरा-सुरत.

[illegible]यिता-सूर्यपुर[illegible]शाङ्करयन्त्रालयाधिपतिः नारायणराव लक्ष्मणराव नीकम, श्री 'शंकर' प्रिन्टींग प्रेस-सुरत.

[illegible]वत् २४५९.    विक्रम संवत् १९८९.    ईस्वीसन् १९३३.    मूल्यं १-०-०।



## साङ्को विषयानुक्रमः—

॥ अर्हम् ॥

नमो नमः श्रीवीतरागेभ्यः

पूज्यपादयुगप्रधानसूत्रसम्मतप्ररूपकश्रीमज्जिनदत्तसूरीश्वरेभ्यो नमः

यवनसम्राट्श्रीअकब्बरप्रतिबोधकवादीकन्दकुद्दालयुगप्रधानश्रीमज्जिनचन्द्रसूरिविनेयावतंसमहोपाध्यायश्रीजयसोमगणिशिष्यरत्नवाचनाचार्य श्रीगुणविनयगणिविरचितं निन्हवानन्दप्रखरीपूर्वजधर्मसागरीया-ईर्यापथिकीषट्त्रिंशिका-ऽन्तर्गतोत्सूत्रोद्घाटनकुलकस्योत्तरात्मकं

# धर्मसागरीय-उत्सूत्रखण्डनम्.

प्रणम्य रम्यशर्माणां[1], कारकं विघ्नवारकं। श्रीवामादारकं पार्श्वं, भुवनैश्वर्यधारकम् । १ । प्रौढप्रभावसद्भावा-ऽऽविर्भावक-मनुत्तरं। योगिनीनां चतुष्षष्टेः, साधकं निर्विबाधकम् । २ । हृदि स्मृत्वा गुणान्धृत्वा, स्फुटं विबुधभाषितान्। तस्यैव विविधान् श्रीम-ज्जिनदत्तगुरुं वरम् । ३ । (युग्मं)। तद्दूषकं वचोयुक्त्या, विदूषकमिवोत्कटं। दूषयामस्सतां दोषान्, प्रणयन्तं मुधा मदात् । ४ ।

1 शर्मप्रपीत्युणादौ।

मात्सर्यं बिभ्रतो मूढा, व्यवस्यन्ति मुधा बुधान्। किञ्चिज्ज्ञत्वमदालीढा, अहो!! दूषयितुं कथम्।५। नाऽभिभानुरजः क्षेपस्तदास्ये प्रवर्त्तते। केवलं स्वाननं तेन, रजोभिरवगुण्ठितम्।६। दोषोद्भावनतस्तेन, स्वात्मैव ननु दूषितः। स्त्रीयाहितकुचेष्टाभिः, कोशकारककीटवत्।७। नास्माकं तदुपर्य्यस्ति, कोपः कोऽपीह लेशतः। दूषयामो यदुत्सेस्त-मागमोक्तिर्मुनिव्रतम्।८। उन्मार्गं यत्परित्यज्या-द्रियन्तां वर्त्मसुन्दरं। धर्ममर्मविदश्शिष्टा, भानुभानुप्रचारवत्।९। वाचां प्रपञ्च एषोऽत्र, प्रणयन्तां महाधियः। एतदर्थं इति स्पष्टं, मम प्राज्ञजनाग्रतः।१०। स्वकीयदूषणोद्धारं, कुर्महे नर्महेतुभिः। जानन्तोऽपि समान् दोषान्, दूषयामः पराश्च तैः।११। यतः "आर्योऽपि दोषान् खलवत्परेषां, वक्तुं हि जानाति परं न वक्ति। किं काकवत्तीक्ष्णतराननोऽपि, कीरः करोत्यस्थिविघट्टनानि ?।१२।" परः शता यतो दोषा, भवन्तु किल सन्त्यमी। तत्रास्माकं त्वया ध्येया, चित्ते गजनिमीलिका।१३। स्वास्येन स्वापवादस्यो-च्चारो नैव घटामटेत्। वञ्चनं चापमानं च, मतिमान्न प्रकाशयेत्।१४। तथापि वैकृतं[1] तस्य, वैकृतं स्यान्निराकृतं। तदुक्त्यैव ततोऽस्माभि-र्विविच्य तदिहोच्यते।१५। आदौ मङ्गलमारभ्यं, सभ्यैः सन्मार्गगामिभिः। उपद्रवो हि दुष्टानां, जनितो मङ्गलक्रिया।१६। दुष्टदौरात्म्यविच्छेद-स्तद्भावे खलु सम्भवेत्। तद्भावः सूत्रपाठेऽस्मिन्, निरासोऽस्मत्कृतोत्तरात्।१७। तत्रेयं तत्कृता गाथा—

पणमिय वीरजिणिंदं, सुरिंद पूइयपयारविंदजुगं। उट्टियमयउस्सुत्तं, दंसेमि गुरूवएसेणं॥१॥

इह हि सकलयौक्तिकचक्रचूडामणितयात्मानं मन्यमानेन सर्वदाऽपि प्रसभं पोषितस्वाभिमानेन गुणवत्सु विद्वत्सु मत्सरं

॥१॥

१ विकृतिरेव वैकृतमिति प्रज्ञादित्वात् स्वार्थे वाऽण्।

विद्धानेन मुग्धजनसमाजेऽत्यूर्जितस्फूर्जतिमभिदधानेन भवता यत्पूर्वमौष्ट्रिकत्वमुक्तं श्रीजिनदत्तसूरिगुरूणां· तदेव न समीचीनता-
मञ्चति, मत्तोन्मत्तप्रलापवत्, यतो भवद्गुरुणा स्वपक्षसिद्धये श्रीजिनदत्तसूरय एव प्रमाणीकृताः, अत्र 'अग्नीकरवाणि' न्यायेनैकस्य
प्रामाण्याभ्युपगमेऽन्यस्यापि प्रामाण्यमभ्युपगतं भवति, यथा कश्चिदाह–'अग्नीकरवाणि' इति, तं प्रत्याह 'कुरु' इति कर्तर्यनुज्ञाते कर्माप्य-
नुज्ञातं भवति, अपर आह-'अग्नौ करिष्यते' इति, तं प्रत्याह 'क्रियतां' इति कर्मण्यनुज्ञाते कर्ताऽप्यनुज्ञातो भवति, तथा श्रीजिनदत्तसूरीणां
प्रामाण्येऽभ्युपगत एव श्रीरत्नशेखरसूरीणामपि प्रामाण्यं सिद्धं बोद्धव्यं, अप्रामाणिकेन प्रामाणिकवस्त्वसिद्धेः, तथाचाचारप्रदीपकर्त्रा
रत्नशेखरसूरिणा युष्मत्पूर्वजेन कालवेलाप्ररूपणाऽधिकारे–" आचारणया तु रात्रौ द्वे कालवेले–मध्यरात्रे रात्र्यन्ते च, दिनेऽपि
द्वे–मध्यान्हे दिनान्ते च, खरतरश्रीजिनदत्तसूरिकृते सन्देहदोलावलीसूत्रेऽप्येवमुक्तं–चउपोरिसिओ दिवसो, दिणमज्झेऽन्ते य दुन्नि
घडियाओ। एवं रयणी मज्झे, अंतंमि य ताव चत्तारि। १।" (मुद्रितआचारप्रदीपे ११ पत्रे) इत्यादि वदता श्रीजिनदत्तसूरीणां
बहुमानो दधे, तथा "व्याख्याताऽभयदेवसूरिरमलप्रज्ञो नवांग्याः पुन-र्भव्यानां जिनदत्तसूरिरददाद्दीक्षां सहस्रस्य तु। प्रौढिं श्रीजिन-
वल्लभो गुरुरधाद् ज्ञानादिलक्ष्म्या पुन–र्ग्रन्थान् श्रीतिलकश्चकार विविधांश्चन्द्रप्रभाचार्यवत् ।१।" इति श्रीमुनिसुन्दरसूरयस्त्रिदशतरङ्गिण्यां।
अन्यच्च दुर्लभराजसदसि चैत्यवासिनां पुरो वसतिवासव्यवस्थायां प्रकटीक्रियमाणायां विक्रमतोऽशीत्यधिकदशशतप्रमितवर्षे खरतरेति
बिरुदं प्राप्ता वयं, न काप्यौष्ट्रिकत्वं प्रणीतवन्तः केचिद् भवतः सैचयिकांश्च विहाय, परं ज्ञायते त्वदीयमानसमेभिर्निर्ममे–"सर्वोत्कट-
कालकूटपटलैः सर्वैरपुण्योच्चयैः, सर्वव्यालकुलैः समस्तविधुराधिव्याधिदुष्ग्रहैः। नूनं क्रूरमकारि मानसममुं दुर्मार्गमासेदुषां, दौरात्म्येन
निजघ्नुषां जिनपथं वाचैव सेत्यूचुषां।२६।" (संघ पट्टके), औष्ट्रिकत्वं त्वयोच्यते यदुष्ट्रमारुह्य तं नेथुस्तदसम्मतं, नास्माकं पूर्वजा

एतत्कर्मसमाचीर्णवन्तः, स्वगृहसर्वस्वं गृहस्वामिन एव विदन्ति, न परे, ततस्त्वयाऽऽगमिष्यदशुभोदयादिदं प्रलपितं, वातिकवद् भक्षितहृत्पूरबीजवद्वा, यतः "दह्यमानाः सुतीक्ष्णेन, नीचाः परयशोऽग्निना । असक्तास्तत्पदं गन्तुं, ततो निन्दां प्रचक्रिरे ॥ १ ॥" तत औष्ट्रिकत्वमेवासिद्धं चेत्तन्मतोत्सूत्रप्ररूपणा निर्मूलैव, औष्ट्रिकमतोत्सूत्रमिति१ स्वपता उत्सूत्रमेव तयाऽऽलापि, उत्सूत्रोत्सूत्रतायां सूत्रोक्तता सिद्धा, दारिद्र्यदरिद्रतायां श्रीमत्तावद्, इति तामेव तदुक्तोत्सूत्रदूरिकरणेन दर्शयामः, स्थिरीभवोद्वेजिता भवता सर्वेऽपि साधवस्तद्वैरनिर्यातनमेकपद एव विदध्महे, कदाचित्कृष्णनिशीथे दस्यूनामवसरो वासरे किल साधव एव प्रगल्भन्ते, 'लवणतरङ्गिणी हि ह्रदगताम्भांसि सर्वाण्यप्येकसमय एव निश्शोपयिष्यती'ति न्याय आपन्नोऽस्ति । १ । (अवचूरिसहितातत्कृतागाथा)

तं उस्सुत्तं चउहा, परूवणाभेअओ भवे एअं । नूणा[१] ऽहिया[२] ऽजह-ट्ठाण[३] किरियमजहत्थकहणं[४] च ॥२॥

"तदेव उत्सूत्रं प्ररूपणाभेदतश्चतुर्धा भवेत्, 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति न्यायात् क्रिया शब्दस्य प्रत्येकमभिसम्बन्धः 'नूणाहिय' त्ति न्यूनक्रिया १ अधिकक्रिया २ अयथास्थान क्रिया ३ चेति त्रयं, चतुर्थं चायथार्थकथनं ४, वस्तुन इति गम्यं, चः समुच्चये।"

१ वदता तेन स्वकीयं तपौष्ट्रिकमतत्वं निन्हवत्वं सङ्घबाह्यत्वं च दर्शितं, यदुक्तं "कलौ जिनमते जातो, धर्मसागरनिन्हवः। तपौष्ट्रिकमतस्तस्मात्, समुद्भूतः कदाग्रहात् ।१।" अनेन तथैवास्य बहुभिः पूर्वजैः उष्ट्रिकामारुह्य खरीं चारुह्य पलायनं कृतं, यतः पत्तने तथा स्तम्भनपुरादिषु सभामध्ये मलिन उपदेशो दत्तः यदुत-स्त्री जिनपूजां कुर्वंति ऋतुवती जाता सातिशयमूलजिनबिम्बं पूजयति तत्र न दोषस्ततस्तत्तिरस्कारदुःखतापेन तथा कृतं, तापानुकूलं नाम जातं स्वीकृतं च पाश्चात्यैरिति जीर्णपत्रे, शतपद्यां "गाढक्रियस्तापसः" इति नाम, सागरोत्पत्तौ विजयतिलकसूरिरासे चाधिकं विद्यते ततस्सर्वं ज्ञेयम् ।

तत्थाइमं च इत्थी-जणपूअनिसेहणं च[1] जिणभवणे । नट्टइनचनिसेहो[2], मासंकप्पस्स वुच्छेओ[3] ॥३॥

१-"तथा इमं च न्यूनक्रियारूपमुत्सूत्रं स्त्रीजनपूजानिषेधः" तत्र तावद्दत्तावधानो निरस्तस्वपक्षाभिमानः क्षणं माध्यस्थ्यं भजन् शृणु, तत्र स्त्रीजनपूजानिषेधः किमस्माभिः सामस्त्येनैकदेशेन वा प्रतिपाद्यते ?, आद्यपक्षे किं सर्वासां स्त्रीणामथ सर्वप्रकारैर्वा ?, नाद्यः पक्षः, बालत्वे वृद्धत्वे च तासां तदनिषेधात्, नापि द्वितीयः, तासां वरगन्धधूपादिपूजायाः स्वीकारात् । अथैकदेशेनेति पक्षस्तत्र कासांचित्स्त्रीणां ? केनचित्प्रकारेण वेति ?, तदुभयमपि युक्तमेव, मलिनस्त्रीणां तत्करणं सर्वैरभ्युपगतमेव, युवतीमाश्रित्य मूलप्रतिमाऽङ्गस्पर्शनप्रतिषेधप्रकारस्तु पूर्वाचार्यैरप्यादृतस्तथाहि-"सागारमणागारं, ठवणा कप्पं वयंति मुणिपवरा । तत्थ पढमं जिणाणं, महामुणीणं च पडिरूवं ॥१॥ तं पुण सपाडिहेरं, अपाडिहेरं च मूलजिणबिंबं । पूइज्जइ पुरिसेहिं, न इत्थियाए असुइभावा ॥२॥ काले सुइभूएणं, विसिट्ठपुप्फाइएहि विहिणा उ । सारत्थयथुत्ति गुरुई, जिणपूआ होइ कायव्वा ॥३॥ पुरिसेणं बुद्धिमया, सुइबुद्धि भावओ गणितेण । जत्तेण होइयव्वं, सुहाणुबंधप्पहाणेणं ॥४॥ संभवइ अकालेवि हु, कुसुमं महिलाण तेण देवाणं । पूयाए अहिगारो न ओहओ होइ सुत्तुत्तो ॥५॥ लोगुत्तमदेवाणं, समऽवणे सम्मुचिओ इवं नेओ । सुइगुणजिट्ठत्तणओ, लोए लोउत्तरे पुरिसो ॥६॥ न छिवंति जहा देहं, ओसरणे भावजिणवरिंदाणं । तह तप्पडिमंपि सयं, पूयंति न जुवनारीओ ॥७॥" इत्यष्टादशगाथाप्रमित-: पूर्वाचार्यकृतविचारसारकुलके पूर्वाचार्या मूलजिनप्रतिमापाणिस्पर्श प्रतिषेधयाञ्चक्रुः, तथा चर्चरीप्रकरणे श्रीजिनदत्तसूरयः प्रोचुः-: "जहि न मलिणचेलंऽगिहि जिणवरु पूइयइ, मूलपडिम सुइभूइ वि छिवइ न सावियइ । आरत्तिउ उत्तारिउ जं किर जिणवरह,

तं पि न उवारिज्जइ वीयजिणेसरइ ॥१४॥" तथा श्रीजिनदत्तसूरिकृतोत्सूत्रपदोद्घट्टनकुलकेऽप्युक्तं तैः—"पूएइ मूलपडिमं पि साविया" इत्युत्सूत्रं। नहि तेषां गुरूणां जिनपूजां कुर्वाणाः स्त्रियः स्नानादिकृत्येन शीतकाले माऽभूवन् दुःखिता इति स्त्रीषु रागोऽङ्गपूजामात्र-निषेधकारणं, उष्णकाले स्नानादिना सुखस्यापि तासु सम्भवात्, यदि शीतकाल एव तासां पूजा तैर्निषिद्धा भवेत्तदा रागमूल-कत्वमपि तन्निषेधे भवेत्, मौलप्रसिद्धप्रतिमाव्यतिरिक्तानां जिनप्रतिमानां पूजायास्तासु साक्षादनिषेधाच्च। नापि जिनप्रतिमासु द्वेषाद्वा स्त्रीणां पूजानिषिद्धा, स्थाने स्थाने विधिचैत्ये विधिपूजायास्तैः प्रशंसितत्वात्, अविधिपूजाप्रतिषेधे तद्विधावेव विद्वेषः, तद् द्वेषस्य न्यायपरत्वेन नोक्तदोषः। नापि स्त्रीषु पूजाजनितफलं मा भूदिति द्वेषाद्वा पूजा निषिद्धा, सुगन्धिधूपाक्षतकुसुमप्रकरदीपनैवेद्य-कल्पगीतनाट्यवाद्यादिविविधपूजानां तास्वनिषेधात्, तथा च सातिशयमौलजिनप्रतिमानां जिनशासनोन्नतिकारिकाणामकालसमुद्भूत-मालिन्यप्रसरेण दूषितया योषितः करस्पर्शनाधिष्ठायकदेवताऽपगमो माभूदिति लाभविशेषमाकलय्य सातिशयमौलप्रतिमासु तासां स्पर्शेन तैः पूजानिषिद्धेति×, तथा जिनपतिसूरिभिरप्युक्तं—"इत्थीणं देवपूआ निसेहो १९" तत इयमाचरणा न दोषावहा, चतुर्थ्यां

× उक्तं च "श्रीजिन पडिमा पूजा भाखी, ऋतुवंती नहीं पूजे नार जी। धन हाणी काया रोग इह भवे होवे, शासन मलिनता कारजी॥ जिन अंग पूजती ऋतुवंती थाय जे, करे देव प्रभाव निसार जी। ते स्त्री न पूजे देवाधिष्ठ मूल बिंब, जे शासन उन्नति कार जी॥१॥ आव्या पूर्व नवाणुं आदिजिन, चोमासी अजित शांति कोधीजी। तीरथ आशातना प्रभाव नष्टकारी, ऋतुवंती पूजा निषेधी जी। सिद्धगिरि जिन दर्शन पूजन, सहुने चोमासे कीम निषेधुं जी।

पर्युषणापर्ववत्, तत्सूत्रमिदमुदितं तेनेति फल्गुवल्गितम् ॥११॥

२–तथा " जिनभवने नर्त्तकी नृत्यनिषेधः " इदमप्यसाधीयो, नर्त्तकी नृत्यनिषेधः केन क्रियते ?, अस्मद्गुरुभिः श्रीजिनवल्लभ-सूरिभिः सङ्घपट्टके सप्तमवृत्ते नर्त्तकी नृत्योपदेशस्य प्रत्युतोक्तत्वात्तथाहि–"गायन्नर्त्तनृत्यत्तणरणन्मणिरणद्वेणुगुञ्जन्मृदङ्ग-प्रेङ्खत्पुष्पस्रगुद्यन्मृगमद-लसद्धूपौघचञ्चज्जनौघे । देवद्रव्योपयोगाद्युपमठपतिताऽऽशातनाभ्यस्तसन्तः, सन्तः सत्क्रियौघे न खलु जिनगृहेऽर्हन्मतज्ञा वसन्ति ॥७॥" तथा श्रीजिनदत्तसूरिभिस्तत्पादाम्भोजचञ्चरीकैः प्रौढवाराङ्गनानृत्यनिषेधे प्रतिपादितेऽपि चर्चरी प्रकरणे "गुरुवयणि नंदी नचाविज्जइ" इत्युक्तं[१], तेन तत्प्रतिषेधः क्व कृतः ?, अपरं श्रीजिनपतिसूरिभिरप्युक्तं–"न देइय वेसानच्चणं" तदपि संवेगरसाकुलितचेतोवृत्तिभिर्मनो-प्रत्यक्षं विकारं निवारयद्भिः प्रौढवेश्यानर्त्तननिषेधः साधितः, स च साधीयानेव, यत्र लाभप्रकर्षो भवति सो मार्गो दर्श्यते महाशयैः, नच सूत्रानुक्तत्वात्तद्दर्शने दोषापत्तिस्तद्दर्शनस्य सूत्रेऽप्यनुज्ञानात् "तम्हा सव्वाणुन्ना, सव्व निसेहो य पवयणे नत्थि । आयं वयं तुलिज्जा, लाहाकंखिव्व वाणिअओ ॥१॥" इति वचनात् ॥१२॥

---

अट्ठो कोश ऊंचा गिरि जावातुं, कल्पसूत्रे वीरे कीधुं जी ॥२॥ श्रीसिद्धाचले आदि जिन आव्या, पूर्वनवाणुं वारजी । अजित शांति चोमासुं कीधुं, गणधर मुनि परिवारजी ॥ दर्शन पूजन, भविजन कीधुं, देशना अमृत पीधुं जो । चोमासे तलाटी देरे, जिन दर्शन पूजन, नर स्त्री किम निषेधुं जो ॥१॥" एतज्जिनदर्शनपूजानिषेधं स्वयं कुर्वन्तः पश्यन्तोऽपि न पश्यंति उत्सूत्रं आधुनिकाः मूढाः ।

१ तथा श्रीजिनदत्तसूरिकृते उपदेशरसायनरासकेऽपिभणितं एतदर्थसंवादकोऽयं पाठः "जा लहुडी सा नच्चाविज्जइ, वड्डी सुगुरु वयणि· वारिज्जइ ॥३१॥"

३–तथा "मासंकप्पस्स वुच्छेओ'त्ति मकारस्यालाक्षणिकत्वान्मासकल्पस्य व्युच्छेदस्तदुत्सूत्रं." तदप्यज्ञताबोधकं वचः, इयमाचरणा, यतः पञ्चवस्तुकसूत्रवृत्त्योरुक्तं–"अवलंबिऊण कज्जं, जं किंचि समायरंति गीयत्था। थोवावराहबहुगुण, सव्वेसिं तं पमाणं तु।२७९। व्याख्या–अवलंब्याश्रित्य यत्किञ्चिदाचरन्ति-सेवन्ते, गीतार्था-आगमविदः, स्तोकापराधं बहुगुणं मासकल्पाविहारवत्, सर्वेषां-जिनमतानुसारिणां तत्प्रमाणमेव, उत्सर्गापवादरूपत्वादागमस्येति गाथार्थः" एतावता मासकल्पेन योऽविहारः–अविहरणं तद्वदन्याप्याचरणा प्रमाणमेवेति वदता (उक्तं) मासकल्पेन न विह्रियते, इयमाचरणा कथमुत्सूत्रं त्वयोदितं ?, अन्यच्च सहेतुकं मासकल्पाविहरणं पञ्चलिङ्गीप्रकरणेऽपि (५३ पत्रे) द्वादशमगाथा व्याख्याने प्रोचे, तथाहि–"गीतैः–गीतार्थैः प्रमादबाहुल्यकालादिदोषादागमोक्तमपि प्रतिषिद्धं-निवारितं यतीनां सम्प्रति मासविहारात्मादिप्रमाणकल्पधारणपटलादिग्रहणप्रभृति, मासकल्पप्रायोग्यक्षेत्राद्यभावेन यतीनां धृतिसंहननादिवैकल्येन शैक्षाऽगीतार्थादीनां भिक्षादिषु मर्यादालोपेन च गीतार्थैर्द्रव्यतो मासकल्पविहारादिप्रतिषेधेनाचरणाकल्पव्यवस्थापनात्, तथा च व्यवहारभाष्यकारः 'धिइसंघयणाईणं, मेराहाणिं च जाणिउं थेरा। सेहअगीयत्थाणं, ठवणा अईभकप्पस्स।१।' तथा 'कालाइदोसओ पुण, न दव्वओ एस कीरइ नियमा। भावेण उ कायव्वो, संथारगवच्चयाईहिं।१।' इत्यादि" इति तृतीय कण्टकोद्धारः १।३।३।

मोत्तूणं चउपव्विं, पोसहपडिसेहणं[४] च तस्स मए। छट्ठाइतवुच्चरणं[५], पढमदिणे तेण पडिसिद्धं।४।

"तस्य मते चतुष्पर्वीं विना पौषधप्रतिषेधनं" इदमप्युत्सूत्रं वदतस्ते न वक्रं वक्री भवति ?, शास्त्रेषु विद्यमानस्य भावस्यापन्हवात्, यतः–"शास्त्रे चतुष्पर्व्यामेव पौषधभणनात्, चतुर्विधेन शुद्धेन, पौषधेन समन्वितं। तत्पर्वदिवसे कृत्य, मऽतिचारविवर्जितं।११२।

व्याख्या-'पर्वदिवसे' अष्टमी चतुर्दशीपूर्णिमाऽमावास्यापर्युषणादिपुण्यवासरे तत्सामायिकं 'कृत्यं' कार्यं, कीदृक् ?, समन्वितं, केन ? पौषधेन, अत्र पौषधसामग्र्यभावेऽपर्वदिवसेऽपि केवलस्यास्य सामायिकस्य कार्यतया प्रतिपादनात् पौषधान्वितं सामायिकं पर्वदिवसेष्वेव कार्यमिति सिद्धं, तदुक्तं श्रीसूत्रकृताङ्गे तद्वृत्तौ च (पत्र ४०८)-'चाउद्दसऽट्ठमुद्दिट्ठपुण्णमासीणीसु पडिपुण्णं पोसहं सम्मं अणुपालेमाणे × × विहरंति, टीका-चतुर्दश्यष्टम्यादितिथिषु, उद्दिष्टासु-महाकल्याणकसम्बन्धितया पुण्यतिथित्वेन प्रख्यातासु, तथा पूर्णमासीषु च-तिसृष्वपि चतुर्मासकतिथिषु इत्यर्थः " इति श्रीजिनपतिसूरिपट्टलक्ष्मीतिलकश्रीजिनेश्वरसूरिविरचिते श्रावकधर्मप्रकरणे तच्छिष्यलक्ष्मीतिलकोपाध्यायकृतवृत्तौ । तथा तत्त्वार्थवृत्तौ-"दिग्देशानर्थदण्डविरतिसामायिकपौषधोपवासोपभोगपरिभोगपरिमाणातिथिसंविभागव्रतसम्पन्नश्च (अ० ७ मूलसूत्र १६, टीका) कृतद्वन्द्वा दिगादयस्तैः 'सम्पन्नः' समृद्धः-संयुक्तः, च शब्दः समुच्चयवचनः, प्रतिपन्नाणुव्रतस्यागारिणस्तेषामेवाणुव्रतानां दार्ढ्योपादानाय शीलोपदेशः, शीलञ्च गुणशिक्षाव्रतमयं, तत्र गुणव्रतानि त्रीणी-दिगुपभोगपरिभोगपरिमाणानर्थदण्डविरतिसंज्ञान्यणुव्रतानां भावनाभूतानि, यथाऽणुव्रतानि तथा गुणव्रतान्यपि सकृद्गृहीतानि यावज्जीवं भावनीयानि । शिक्षापदव्रतानि-सामायिकदेशावकाशिकपौषधोपवासातिथिसंविभागाख्यानि चत्वारि, प्रतिदिवसानुष्ठेये द्वे सामायिकदेशावकाशिके पुनः पुनरुच्चार्येते इति यावत्, पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ, न प्रतिदिवसाचरणीयौ, पुनः पुनरष्टम्यादितिथिष्वनुष्ठीयेते " तथा श्रावकप्रज्ञप्तिवृत्तौ हरिभद्रसूरिकृतायां (१८२ तमे पृष्ठे) तथा (पञ्चाशकवृत्तौ ३० तमे पत्रे) "तत्र प्रतिदिवसानुष्ठेये द्वे सामायिक देशावकाशिके पुनः पुनरुच्चार्येते इति भावना, पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ, न प्रतिदिवसाचरणीयाविति" तथा पञ्चाशकसूत्रं-"एत्थ उ सावगधम्मे, पायमणुव्वयगुणव्वयाइं च । आवकहियाइं सिक्खा-वयाइं पुण इत्तराइं ति ।३१। व्याख्या-'एत्थ' त्ति पुनः

भणिए, 'तु' सद्दो विसेसं करेइ, तहाहि-जइ धम्मे महव्वयाणि आवकहियाणि चेव भवंति, एत्थ पुण सावगधम्मे पायमणुव्वयाणि य गुणव्वयाइं च जावज्जीवियाणि भवंति, पायग्गहणाओ पुण चाउम्मासाइकालपमाणेणवि भवंति, सिक्खावयाणि पुण 'इत्तरियाणि' अप्पकालियाणि, तत्थ पइदिवसाणुट्ठेयाणि सामाइयदेसावगासियाणि पुणो पुणो उच्चारिज्जंति त्ति भणियं होइ, पोसहोपवासअतिहिसंविभागा पुण पतिनियतदिवसाणुट्ठेया, न पइदिवसाणुट्ठेया" इति पञ्चाशकचूर्णिः। "एत्थ पुण समणोवासगधम्मे पंच अणुव्वयाइं तिण्णि गुणव्वयाइं आवकहियाणि, चत्तारि सिक्खावयाणि इत्तरियाइं" इत्यावश्यकसूत्र (पत्र ८३८), अस्य व्याख्या–"अत्र पुनः श्रमणोपासकधर्मे, पुनः शब्दोऽवधारणार्थः, अत्रैव, न शाक्यादिश्रमणोपासकधर्मे, सम्यक्त्वाभावेनाणुव्रताद्यभावादिति, वक्ष्यति च–'एत्थ पुण समणोवासगधम्मे मूलवत्थुसम्मत्त' मित्यादि, पञ्चाणुव्रतानि प्रतिपादितस्वरूपाणि, त्रीणि गुणव्रतानि उक्तलक्षणान्येव, यावत्कथिकानीति-सकृद्गृहीतानि यावज्जीवमपि भावनीयानि, चत्वारीति सङ्ख्या, शिक्षापदव्रतानीति 'शिक्षा' अभ्यासस्तस्य पदानि-स्थानानि तान्येव व्रतानि शिक्षापदव्रतानि, इत्वराणीति, तत्र प्रतिदिवसानुष्ठेये द्वे सामायिकदेशावकाशिके पुनः पुनरुच्चार्ये इति भावना, पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ, न प्रतिदिवसाचरणीयाविति" इत्यावश्यकबृहद्वृत्तौ (पत्र ८३९)। अत्र (अर्थदीपिकाख्यायां श्राद्ध) प्रतिक्रमणवृत्तौ श्रीरत्नशेखरसूरिभिः श्रावकपञ्चमप्रतिमाऽधिकारे आवश्यकबृहद्वृत्तेः पाठपरावर्त्तेनद्वारा 'न प्रतिदिवसाचरणीया' वित्यत्र नकारो न प्रतिषेधवाचक इत्यूचे, तदयुक्तं, सासितया परिकल्पिततथाविधपाठस्यैव तत्राभावात्, परलोकभीरुता दूरेऽस्तु, साक्षादुक्तपाठोऽपि नेक्षितस्तैः, तथाहि–"ननु 'पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ, न प्रतिदिवसाचरणीयौ' इति श्रीहरिभद्रसूरिकृतावश्यकबृहद्वृत्ति-श्रावकप्रज्ञप्तिवृत्त्यादौ साक्षादुक्त एव तन्निषेध इति चेत् ?, अहो ग्रन्थ-

काराभिमायज्ञता भवतः !!, नहीदं वचनं पर्वान्यदिनेषु पौषधनिषेधपरं, किन्तु पर्वसु पौषधकरणनियमपरं, यथा आवश्यकवृत्यादौ श्राद्धपञ्चमप्रतिमाऽधिकारे 'दिवैव ब्रह्मचारी, न तु रात्रौ' इति वचनं दिवसे ब्रह्मचर्यनियमार्थं, न तु रात्रौ अब्रह्मनिषेधार्थं, अन्यथा पञ्चमप्रतिमाऽऽराधकश्राद्धेन रात्रावब्रह्मचारिणैव भाव्यमिति पापोपदेश एव दत्तः स्यात्, रात्रौ ब्रह्मपालने प्रतिमाऽतिचारश्च प्रसज्येत" (इत्यर्थदीपिकायां १६५ पत्रे), एवञ्चैभिः श्रीरत्नशेखरसूरिभिर्विना प्रतिष्ठानं प्रासादोत्तम्भनन्यायः स्मारितः, आवश्यकबृहद्वृत्तौ तु (६४७ पत्रे) पाठश्चायं-" दिया बंभयारी, राईपरिमाणकडे अपोसहिए। पोसहिए रत्तिमि य, नियमेणं बंभयारी य।५। इय जाव पंचमासा, विहरति हु पंचमा भवे पडिमा"। समवायाङ्गे (पत्र १९) " दिया बंभयारी, रातिं परिमाणकडे", तथा प्रवचनसारोद्धारवृत्तौ-" असिणाणवियडभोई, मउलियडो दिवसबंभयारी य। रत्तिं परिमाणकडो, पडिमावज्जेसु दिवसेसु"। (मूल गाथा ९८६, पत्र २९४, टीकायां) " प्रतिमावर्जेषु-कायोत्सर्गरहितेष्वपर्वस्वित्यर्थो, दिवसेषु-दिनेष्वित्यर्थः"। तथा पञ्चाशकचूर्णौ-" जाव पडिमा पंचमासिया न समप्पति ताव दिवसओ बंभयारी, रत्तिं परिमाणं करेति-एग दो तिन्नि वा वारे अपोसहिओ, पोसहिओ रत्तिंपि बंभयारी"। तथा स्थानाङ्गवृत्तौ-" असिणाणवियडभोइ ( अस्नानोऽरात्रिभोजीत्यर्थः ), मउलिकडो ( मुत्कलकच्छ इत्यर्थः ) दिवसबंभयारी य। राइं परिमाणकडे, पडिमावज्जेसुदियहेसु।१। झायइ पडिमाइ ठिओ, तिलोयपुज्जे जिणे जियकसाए। नियदोसपच्चणीयं, अन्नं वा पंच जा मासा।२।" एतादृश एव पाठ उपासकदशावृत्तौ। तथाऽऽवश्यकचूर्णौ प्रकारान्तरमपि दृश्यते-"राइभत्तपरिन्नाएत्ति पंचमी, सचित्ताहारपरिन्नाएत्ति षष्ठी, दिवाब्रह्मचारी राओ परिमाणकडत्ति सप्तमी" एवञ्चैषां स्वपक्षसिद्धये यत्प्राच्याचार्यपाठपरावर्तनं तन्महापापमिति। एवं नियतदिनेषु पौषधविधिप्रतिपादकेषु तदन्यदिनेषु च तन्निषेधसाधकेषु शास्त्रेषु जाग्रत्सु ये पुनर्नियतदिनान्यदिनेषु

पौषधं विधापयन्ति भवत्सदृशास्त एवोत्सूत्रप्ररूपिणश्चौराः, × तदेवं तव काकारेरिव प्रतिनियतदिवसग्राह्यपौषधव्रतधाम्नो ध्वान्तात्मकतया तदन्यदिनतद्ग्रहणतमसः प्रकाशात्मकतया च प्रतिभानं विचार्यमाणं कथं न व्याहतं भवति ?, विशेषार्थिनाऽस्मद्गुरुश्रीजयसोममहोपाध्यायविहितस्वोपज्ञ 'पौषधषट्त्रिंशिका' विलोकनिया, स्थानाशून्यार्थमस्माभिर्दिङ्मात्रं दर्शितम् । १ । ४ ।

५–"छट्ठाइ तवुच्चरणं-प्रथम दिने षष्ठादितपउच्चरणं प्रतिषिद्धं, आदिशब्दादष्टमदशमादिपरिग्रहः" अत्रायं कण्ठोद्धारः–तेनेदमुच्यते–यो द्वावुपवासद्वयं विधास्यामीति धृतमतिः स किल प्रथमदिन एव षष्ठभक्तं प्रत्याख्यामीति प्रतिजानीते, यो हि त्रीनुपवासान् करिष्यामीति धृतबुद्धिः सचाष्टमभक्तमेवं पुरतोऽपि वाच्यं, परमस्यायं महता शब्दददरेणाकविटपिकाष्ठिकान्यायेनासारो विचारप्रकारः, यत इयं चतुर्थषष्ठाष्टमादिसंज्ञा वर्तते, न प्रत्याख्यानोच्चारे प्रवर्तते, प्रथमादिने चतुर्थमिति संज्ञा. द्वितीयेऽन्हि षष्ठं. तृतीयेऽन्ह्यष्टममित्यादि, यदि पुनः प्रथमदिन एव षष्ठाष्टमादि संज्ञा स्यात् ?, तदाऽष्टमभक्तिकस्य मुनेः प्रथमदिनेऽप्यष्टम भक्तत्वात् दशाश्रुताध्ययनोक्ततृतीयदिनप्रायोग्यपानकत्रयमेवोपादेयं भवेत्, न षष्ठचतुर्थप्रायोग्यपानकानि, अनिष्टञ्चैतत्, तथा विकृष्टभक्तिकस्यापि साधोः प्रथमदिन एवोष्णविकटमेवोपादेयं स्यात्, नोत्स्वेदिमादिकमिति, असङ्गतञ्चैतत्, तृतीयदिनादुपर्येव तच्छरीरं देवताऽधिष्ठितमिति शेषपानकानामस्वीकारः, तथा च दशासूत्रं–"विकिट्ठभत्तिअस्स भिक्खुस्स कप्पइ एगे उसिण वियडे"। किञ्चोघनिर्युक्तिवृत्तावपि तथैवाभिहितत्वात्तथाहि "विकृष्टतपसं

× अन्यचेदं–अमावास्यापूर्णिमावृद्धौ सूर्योदययुक्तामुदयचतुर्दशीं पर्वतिथिमपि महामिथ्याकल्पनया द्वितीयां त्रयोदशीं मत्वा अन्येभ्यः कथयित्वा च तस्यामुदयचतुर्दशीपर्वतिथावपि पौषधादिधर्मकृत्यानि ये निषेधयन्ति तदुत्सूत्रं स्पष्टमेव ।

साधुं न व्याहरति, विकृष्टतपश्चाष्टमादारभ्य भवति, तस्यं कदाचिद्देवता प्रातिहार्यं करोति अतस्तस्य न दीयते" इत्युद्धरितभक्ताधिकारे (१९१ पत्रे), किञ्च युगपदष्टमप्रत्याख्याते प्रथमदिने चतुर्विधाहारपरिहारिणोऽन्ययोस्तयोः पानकाहारकर्तुरष्टमप्रत्याख्यातुराद्यदिने कथं प्रत्याख्यानं भवेत्?, तथा अष्टमप्रत्याख्यातोपासकः पाण्मासिकतपश्चिन्तनावसरे आद्यदिने अष्टमं कर्तुं शक्नोमीत्युक्तौ सत्यां द्वितीयेऽन्हि किं तपः कर्तुं शक्नोमीति ब्रूयात्?, तथा प्रथमेऽन्हि अष्टमभक्तं प्रत्याख्यामीत्युक्तावङ्गीक्रियमाणायां एकाभक्तार्थकर्तुः 'सूरे उग्गए चउत्थभत्तं पच्चक्खामी'ति पाठपठनप्रसङ्गः, पठ्यते च 'सूरे उग्गए अब्भत्तट्ठ'मित्यादि, आवश्यकसूत्रे (८५३ पत्रे) तथैवोपलब्धेश्च, तथा च षष्ठाष्टमादिप्रत्याख्यानेष्वपि 'सूरे उग्गए अब्भत्तट्ठं पच्चक्खामी'ति पाठो वाच्यो, न 'छट्ठभत्तं पच्चक्खामी'ति पाठः, षष्ठाष्टमादीनां तु सङ्केतमात्रत्वात्, तथाऽऽद्यदिने युगपदष्टमप्रत्याख्याते दिनान्तरयोः किं प्रत्याख्येयं स्यात्?, पानकोच्चारे तु अभक्ते चतुःस्थानताहानिप्रसङ्गः, यदुक्तं—"पढमंमि चउत्थाइ, तेरस बीयंमि तइयपाणस्स। देसावगासतुरिए" इति प्रत्याख्यानभाष्ये, एवं भवदुक्त्या कोटीसहितप्रत्याख्यानमपि नाराधितं स्यात्, तत्स्वरूपञ्चेदं—"गोसे अब्भत्तट्ठं, जो काउं तं कुणइ बीयगोसे वि। इय कोडीदुगमिलणे, कोडीसहियं तु नामेण ॥१९॥ 'गोसे'त्ति प्रभाते, अभक्तार्थ—उपवासं, यः कृत्वा तमुपवासं करोति द्वितीयप्रभातेऽपि, इति कोटीद्विकमिलने पूर्वदिनकृतोपवासप्रत्याख्याननिष्ठापनालक्षणाया द्वितीयदिनप्रभातक्रियमाणोपवासप्रस्थापनालक्षणायाश्च कोटेर्मिलने तस्य कोटीसहितमिति नाम्ना प्रत्याख्यानं, एवमष्टमादिषु एकतः कोटीद्वयं निष्ठापनारूपमन्यतश्च तृतीयोपवासस्य प्रस्थापनारूपमनयोर्मिलने कोटिसहितं, एवमाचामाम्लनिर्विकृतिकैकासनैकस्थानेष्वपीति" (प्र० पत्र ४४–४५)। आवश्यकवृत्तावपि (८४२ पत्रे)—"भावत्थो पुण—जत्थ पच्चक्खाणस्स कोणो कोणो य मिलति, कथं?—गोसे आवस्सए अब्भत्तट्ठो गहितो, अहोरत्तं

अच्छिऊण पच्छा पुणरवि अब्भत्तट्ठं करेति, वितियस्स पट्ठवणा पढमस्स निट्ठवणा; एते दोवि कोणा एगट्ठा मिलिता"। अन्यच्च "पढमंमि चउत्थाइ, तेरस बीयंमि तइयपाणस्स। देसावगासतुरिए, चरिमे जहसंभवं नेयं।८३।" प्रत्याख्यानभाष्ये इयं गाथाऽऽधुनिककदाग्रहगृहीतकृता सम्भाव्यते, यशोदेवकृतप्रत्याख्यानचूर्णिश्रीआवश्यकवृत्तिप्रवचनसारोद्धारवृत्त्यादिष्वेवमनुच्चारणात्, वृत्तिपाठस्त्वेवं— "प्रथमस्थाने 'चउत्थभत्तं अब्भत्तट्ठं-छट्ठभत्तं अब्भत्तट्ठं पच्चक्खामी'त्यादि याव'चउत्तीसमभत्तं पच्चक्खामी'त्यादि, द्वितीयस्थाने 'पाणहारणमुक्कारसहिअं' इत्यादि प्रागुक्ता एव १३ प्रकाराः, तृतीये 'पाणस्से'ति, चतुर्थे 'देसावगासियं' इत्यादि"। तथा युगपत्प्रत्याख्यातुर्दिनत्रयेऽप्येकदिनप्रत्याख्यानभङ्गे सर्वप्रत्याख्यानभङ्गप्रसङ्गश्चेति मौढ्यादिदमुत्सूत्रं प्रलपितं यत्प्रथमदिन एव षष्ठाष्टमादिस्वीकारितैसंज्ञोच्चारविध्योः कथमैक्यं घटामियर्त्तीति।१।५।४।

गिहिणो[६] पाणागारो-च्चारनिसेहो अ तम्मए भणिओ[७]। सावयपडिमाधम्मो, वुच्छिन्नोऽत्थि त्ति तव्वयणं।५।

६—"गृहिणः 'पाणस्से'त्याकारोच्चारनिषेधस्तन्मते भणितः" अयमपि तस्यागमाकौशलमेव व्यनक्तीति शृणु स्वस्थीभूय, भूयः सन्देह एव ते यथा न स्यात्, इह केचित्सैद्धान्तिकंमन्या गृहस्थानपि यतीनिव पानकाकारषट्कमुच्चारापयन्ति तच्चातीवायुक्तं, वृद्धानामसम्मतत्वात्×, नहि गृहस्था धर्मोपहासभीताः सचित्तवर्जका अप्येकासनादिप्रत्याख्याने खर्जूरादिपानकं वा तिलतण्डुलादिधावनं वा अवस्रावणकाञ्जिकादि

× यदुक्तं बृहत्कल्पभाष्ये "एए छ आगारा साहूणं, न पुण सड्ढाणं" इति, एवं द्व्यशीत्यधिकैकादशशत (११८२) वर्षे निर्मितायां 'चैत्यवन्दनभाष्य'वृत्तौ "एते पानकाकारा यतीनामेव, नतु श्राद्धानां, न खलु श्राद्धाः सर्वविरतयः" इति।

वा पिबन्ति, किं तर्हि ?–उष्णोदकमेव वा विभीतकादिरसभावितोदकमेव वा, तच्च पानकाकारोच्चारणमन्तरेणापि पातुं कल्पते एव,
एतच्च प्राग्'विचारसारचतुष्पदिकावृत्ता'वेव दर्शितं, अथ न कल्पते ? तर्हि–दिवसचरिमप्रत्याख्यानेऽपि पानकाकारोच्चारणप्रसङ्गः, तत्रापि
हि द्विधाहारत्वेन त्रिधाहारत्वेन वा कृते पानकस्य पीयमानत्वात्, नन्विदं रात्रिप्रत्याख्यानं दिवसचरिमभागे एव क्रियमाणत्वात् रात्रि-
भोजननिषेधत्वाच्च रात्रौ च खर्जूरादिपानकानि धर्मविरुद्धत्वेन जैनानामपेयान्येवेति कथं पानकाकारोच्चारण प्रसङ्ग इति चेत् ?, एवं तत्र
त्रिधाहारमिति पदमनुचार्यमेव, एतदनुयायित्वात्पानकाकारोच्चारणस्य, यदुक्तं–"जइ पुणो कुणइ पोरिसि पुरिमेगासणमभत्तट्ठे तिविह-
आहारे पाणगमुद्दिसिउं लेवाडेणिच्चेवमाइयं कुणइ आगाराणं छक्कं, तत्थ य सुत्तं इमं भणियं" इति, अथ शुद्धोदकपानार्थं त्रिधाहार-
मित्यादि पदमुच्चार्यत एव, अन्यथा संमुग्धवाक्यत्वादेकस्याप्याहारस्याभक्षणं सर्वेषामपि वा भक्षणं सम्प्रसज्येत, एवं तर्हि सिद्धं पानका-
कारोच्चारणमन्तरेणापि शुद्धोदकपानं, तथा च यथा दिवसचरिमप्रत्याख्यानेऽनुच्चारितेष्वपि पानकाकारेषु रात्रौ गृहस्थाः शुद्धोदकं पिबंति
तथाऽन्येष्वप्येकासनादिषु दैवसिकप्रत्याख्यानेषु पिबन्तु, समानयोगक्षेमत्वात्, किञ्च खर्जूरतिलतण्डुलधावनाम्लश्रावणादीनि पानकानि यथा
रात्रौ गृहिणामपेयानि तथा दिवाऽप्यपेयान्येव, तत्पानस्य धर्माऽभिमुखानामप्रतिपत्तिहेतुत्वेन. प्रतिपन्नानां विपरिणामहेतुत्वेन. वैधर्मिकाणां
जिनधर्मनिन्दाकृतौ प्रेरकत्वेन च महादोषत्वात्, तथा च तेषां पानकाकारोच्चारणमनर्थकमेव. ननु नानर्थकं, यतो यद्यपि फोगरंगवाढि-
मच्छल्यादिभिः प्रासुकीकृतं जलं त्रिधाहारेण पातुं कल्पत एव, तेषां कषायवृक्षफलछल्लीचूर्णत्वेनानाहारकत्वात्, तथाऽपि विभीतकादिना
प्रासुकीकृतं न कल्पत एव. तस्य स्वादिमाहारत्वादिति, तदर्थं पानकाकारानुच्चरन्तु गृहस्था इति चेत् ?, न, वस्तुवृत्त्या विभीतकादेरपि
कटुफलत्वेनानाहारत्वात्, श्रीजिनदत्तसूरिभिरप्युक्तमुत्सूत्रपदोद्घट्टनकुलके "अजियजलाहारिगिही पाणागारे समुच्चरइ" इदमुत्सूत्रं ।१८।

७–"श्रावकप्रतिमाधर्मो व्युच्छिन्नोऽस्तीति तद्वचनं-चामुण्डिकवचनं" इदमपि तस्य जारगर्भवदनुचार्यमेव, पूर्वं चामुण्डिकत्वमेव श्रीजिनदत्तसूरीणामप्रसिद्धमस्मच्छास्त्रेषु, न च चामुण्डाराधनं तैः क्वापि कृतं, ते हि चतुःषष्टियोगिन्यादिसाधकत्वान्मिथ्यात्वभीरवः कथं तदाराधनं विदध्युः ?, स्वत एव तत्पादयोर्लगन्तिस्म सर्वेऽपि सुराः, तथा चाम्बिकावचोऽम्बडहृदययुगप्रधानत्वनिर्णयाधिकारे–"दासानुदासा इव सर्वदेवा, यदीयपादाब्जतले लुठन्ति। मरुस्थलीकल्पतरुः स जीयाद्, युगप्रधानो जिनदत्तसूरिः ॥१॥" इति,

न च श्रीजिनवल्लभसूरय इदं विदधुस्तेऽपि चित्रकूटे वहिश्चामुण्डादेवकुले चामुण्डाऽवग्रहं गृहीत्वा तस्थुः, ततस्तद्गुणावलोकनार्जिता प्रतिबुद्धा सती श्राविकेव तत्पादाम्भोजभृङ्गी जज्ञे इति प्रवादः, यदि चामुण्डाप्रतिबोधनेन चामुण्डिकत्वं ?, तदा वर्द्धमानस्वामिनोऽप्यस्थिकग्रामे शूलपाणेः प्रतिबोधनाच्छौलपाणिकत्वं वाच्यं स्यात्, नचैवं चामुण्डिकशब्दनिष्पत्तिरपि, नहि प्रतिबोधे ठक्प्रत्ययविधानं क्वापि दृष्टं, 'साऽस्य देवता' (पा० ४–२–२४) इत्याराधनेऽण्प्रत्ययस्योत्पत्तेरभिधानात्, प्रत्युतोच्छिष्टचाण्डालीदेवताऽऽराधनं भवत्सूरीणामेव श्रूयते, तेन भवदुक्त्या भवन्त एवोच्छिष्टचाण्डालिका इति, एवमुक्तेन वैरनिर्यातनं त्वया विहितमिति केवलं स्वीयगच्छवासिनां श्रोत्रसुखमेव जनितं, पश्चात् साहिद्वारे पञ्चवर्षी यावद्दुःखसहनमिदमेव महत्तं तेषां त्वयैव विहितमिति "सुखेन बध्यते कर्म, तद्विपाको हि दुस्सहः। हेलया भ्रियते गर्भो, दुःखेन हि विमुच्यते ॥१॥" गालनावसानत्वं च त्वद्विहितगालनानामेव एव विधिना व्यथितः। अथान्तःस्पदखण्डनं शृणु–'श्रावकधर्मस्य व्यवच्छेद' एतस्यार्थं एव त्वया नाबोधि, तद्व्यवच्छेदवचनमदस्तीर्थोद्गारप्रकीर्णके–"साहूणऽग्गोयरओ, वुच्छिन्नो दूसमाणुभावाओ। अज्जाणं पणवीसं, सावगधम्मो य वोच्छिन्नो ॥१॥" अर्थस्त्वयं–"पूर्वं महात्मनां प्रमादाल्पत्वेन 'अग्गोयरउ'त्ति अग्रवेचारः (अग्रावतारः)–परिधानविशेषः साधुजनप्रतीतः आसीत्, स सम्प्रति व्युच्छिन्नः,

कटीपट्टकस्यान्यथाकरणात्, कस्मात् ?, दुःषमानुभावात् ”। तरुणप्रभसूरिभिरप्ययमेवार्थः समर्थितः—“सम्प्रति प्रमादबाहुल्यात् वामकूर्परेण चोलपट्टकधरणं न जायते तेन दवरकादिना बद्ध्वा बिभ्रति चोलपट्टकं साधवः १” तथा “आर्यिकाणां-साध्वीनां पञ्चविंशत्युपकरणान्यासन्, सम्प्रति तानि व्युच्छिन्नानि २” एतद्द्वयं भवताऽपि स्वीकृतं, तृतीयपदे तव विपदुद्भवो बभूव, 'श्रावकधर्मः' एकादशप्रतिमावहनरूपो धर्मोऽप्युच्छिन्नः, अत्र किमसङ्गतं ?' न हि यः सम्यक्त्वमूलद्वादशव्रतीरूपो धर्मस्तस्य व्यवच्छेदो घटते, तद्वि-च्छेदस्त्वनगारधर्मेणैव सहभावी, तस्मादयमेव युज्यते। तथा पञ्चाशकवृत्तौ (१७६ पत्रे) श्रीमदभयदेवसूरिभिरस्मद्गुरुभिरप्युक्तं—“जुत्तो पुण एस कमो, ओहेणं संपयं विसेसेणं। जम्हा असुहो कालो, दुरणुचरो संजमो एत्थ ।४९।” इति दशमे श्रावकप्रतिमापञ्चाशके, “व्याख्या—यद्यपि क्रमान्तरेणापि प्रव्रज्या स्यात्तथापि युक्तः—सङ्गतः, पुनरिति विशेषणार्थः, एषोऽनन्तरोक्तः प्रतिमाऽनुष्ठानादिः, क्रमः—प्रव्रज्याप्रतिपत्तौ परिपाटिः, कथमित्याह—ओघेन-सामान्येन, न तु सर्वथैव, तं विनाऽपि बहूनां प्रव्रज्याश्रवणात्। कालापेक्षया विशेषमाह—साम्प्रतं वर्तमानकाले, विशेषेण विशेषतो, युक्त एषः क्रमः, कुत एतदेवमित्याह—यस्मात्कारणात्, अशुभोऽशुभानुभावः, कालो दुःषमालक्षणो वर्तते, ततश्च दुरनुचरो दुःखासेव्यः, संयमः संयतत्वं, अत्राशुभकाले, अतः प्रव्रजितुकामेन प्रतिमाऽभ्यासो विधेय इति भावः, इति गाथार्थः” अत्राप्यभ्यास एवोक्तो, न तद्वहनं, उच्छेदेऽप्यभ्यासो घटत एव, यथा जिनकल्पोच्छेदेऽप्यार्यमहागिरिणा तदभ्यासो विदध इति, तथा तिलकाचार्यैरपि स्वसमाचारीग्रन्थे “चतस्रः सम्प्रति प्रतिमाः श्रावकैरुह्यन्ते, शेषास्त्वष्टम्यादिषु सकलरात्रकायोत्सर्गकरणाशक्तेर्नाचरिताः” एभिरप्यग्रेतनप्रतिमानामवहनं उक्तं, तथा श्रीजिनपतिसूरिभिरूचे “संपइ काले सावयपडिमाओ न वहिज्जंति” श्रीजिनदत्तसूरिभिरप्युक्त-मुत्सूत्रोद्घट्टनकुलके “पुरिसित्थीओ पडिमा वहंति वत्थाइमा चउरो” इदमप्युत्सूत्रं शास्त्रानुसारत एव तैः प्रत्यपादीति।१।७।८।

अंविलपच्चक्खाणे, दव्वदुगऽहियाण गहणपरिहरणं[८]। पोसहिअगिलाणाणं; भोअणपडिसेहणं[९] च कयं । ६ ।

८—"आचामाम्लप्रत्याख्याने, गृहिण इति गम्यं, द्रव्यद्वयाधिकानामर्थाद् द्रव्याणां ग्रहणपरिहरणं" एतदप्यनल्पपलालपूलककूटकल्पममतिमोत्तरकुशानुकणमात्रसाध्यं, तथाहि—आचामाम्ले तावद् द्रव्यद्वयग्रहणस्यैव प्रतिपादितत्वात्, अथ तत्साधकशास्त्राणि दर्श्यन्ते, तत्रावश्यकबृहद्वृत्तौ (८५५ पत्रे) पाठस्त्वयं—"एत्थ आयंबिलं च भवति आयंबिलपाउग्गं च, तत्थोदणे आयंबिलं आयंबिलपाउग्गं च, आयंबिला सक्कुरा, जाणि कूरविहाणाणि आयंबिलपाउग्गं, तंदुलकणियाउ कुडंतो पीढं पिहुगा पिट्ठपोवलिया मरोलगा मंडगादि, कुम्मासा पुव्वं पाणिएण उक्कड्डिज्जंति पच्छा उखलीए पीसंति, ते तिविधा—सण्हा मज्झिमा थूला, एते आयंबिलं, आयंबिलपाउग्गाणि पुण जे तस्स तुसमीसा कणियाउ कंकडुगा य एवमादि, सत्तुया जवाणं गोधूमाणं विहिआणं वा, पाउग्गं पुण गोधूमभुज्जिया पिहुगा लाया जवभुज्जिया, जे य जंतएण ण तीरंति पीसितुं, तस्सेव णिद्धारो कणिकादि वा, एयाणि आयंबिलपाउग्गाणि, तं तिविधंपि आयंबिलं तिविधं,—उक्कोसं मज्झिमं जहन्नं च, दव्वतो कलमसालीकूरो उक्कोसो जं वा जस्स पत्थं रुचति वा, रालगो सामागो वा जहन्नो, सेसा मज्झिमा. जो सो कलमसालीकूरो सो रसं पडुच्च तिविधो—उक्कोसो ३, तं चेव तिविधंपि आयंबिलं णिज्जरागुणं पडुच्च तिविधं—उक्कोसो णिज्जरागुणो मज्झिमो जहण्णोत्ति, कलमसालीकूरो दव्वतो उक्कोसं दव्वं चउत्थरसिएण समुद्दिसति, रसओवि उक्कोसं तस्सच्चएण वि आयामेण उक्कोसं रसतो गुणतो जहण्णं थोवा णिज्जरत्ति भणितं भवति, सो चेव कलमोदणो जदा अण्णेहिं आयामेहिं तदा दव्वतो उक्कोसो रसतो मज्झिमो गुणतो वि मज्झिमो चेव, सो चेव जदा उण्होदएण तदा दव्वतो उक्कोसं रसतो जहण्णं गुणतो मज्झिमं चेव,

जेण दव्वतो उक्कोसं न रसतो, इदाणिं जे मज्झिमा ते चाउलोदणा, ते दव्वतो मज्झिमा आयंबिलेण रसतो उक्कोसा गुणतो मज्झिमा,
तेचेव आयामेहिं दव्वतो मज्झिमा गुणतोवि रसतोवि मज्झिमा, तहेव च उन्होदएण दव्वतो मज्झं रसतो जहण्णं गुणतो मज्झं, मज्झिमं
दव्वंति काऊणं, रालगतणकूरा दव्वतो जहण्णं आयंबिलेण रसतो उक्कोसं गुणतो मज्झं, ते चेव आयामेण दव्वतो जहण्णं रसतो मज्झं
गुणतो मज्झं, ते चेव उण्होदएण दव्वओ जहण्णं रसओ जहण्णं गुणओ उक्कोसं, बहुणिज्जरत्ति भणितं होइ अहवा उक्कोसए तिण्णि विभासा-
उक्कोसउक्कोसं उक्कोसमज्झिमं उक्कोसजहण्णं, कंजियआयामउण्होदएहिं जहण्णा मज्झिमा उक्कोसा णिज्जरा, एवं तिसु विभासियव्वं" एवं
श्रीहरिभद्रसूरिकृतश्रावकधर्मविधिप्रकरणवृत्तावप्येतादृश एव पाठः, तथा "विशेपस्तु कलमशालिचतुर्थरसकाद्युत्कृष्टः, कूरः चतुर्थरसकादिश्च
मध्यमः, उष्णोदकादिश्च जघन्यः, गुणतश्च बह्वी निर्जरा उत्कृष्टे, मध्यमा मध्यमे, अल्पा जघन्ये चेति, एवञ्च स्थिते कलमशालिकूरः कलम-
शालिकाञ्जिकेनोत्कृष्ट उत्कृष्टेन यदा भुज्यते तदा जघन्या निर्जराऽल्पेत्यर्थः, तथोत्कृष्टं द्रव्यं जघन्यरसेन भुज्यते मध्यमो निर्जरागुण इत्यादि-
भङ्गका द्रष्टव्या इति, अयमर्थो–द्रव्यरसयोर्द्वयोरुत्कृष्टत्वे जघन्या निर्जरा, एकैकोत्कृष्टत्वे मध्यमा, द्वयोर्जघन्यत्वे उत्कृष्टा निर्जरेति, तत्सूत्रं–
'आयंबिलं पचक्खामि अन्नत्थऽणा० सह० लेवा० उक्खि० गिह० पारिद्वा० महत्तरा० सव्वसमाहि० वोसिरामि' विशेष उच्यते–लेपालेवे-
णालेपो लेपालेपस्तथा–पूर्वं भाजने लेपकृद्द्रव्यं गृहीतं समुद्दिष्टं वा, ततस्संलिखिते भाजने अन्यथानयति न भङ्ग इति, उत्क्षिप्तविवेको
नाम-यथाचाम्ले किमपि विकृत्यादि पतति तदोत्क्षिप्यते यदि शक्यते विवेक्तुं, विवेचिते वा न भायोग्यं स्यादित्युत्क्षिप्ते भङ्ग इति, तथा गृहस्थ-
संसृष्टं नाम यदि गृहस्थो लेपकृद्द्रव्यलेपितदर्वीभाजनादिना ददाति तद्देयच्छिसे न भङ्गो, रस आलिख्यते चेत्तदा न कल्पते, शेषं पूर्ववत्, ××
द्वाविंशत्यभ्यधिकैका-दशवत्सरशतैस्तु विक्रमतः । अकृतैनां नमिसाधुः, शिष्यः श्रीशालिसूरीणां ॥१॥" इति नमिसाधुकृतषडावश्यकवृत्तौ,

तथा (संदेहदोलावल्यां) श्रीजिनदत्तसूरिभिरुक्ते-" गिहिणो इह विहियायंबिलस्स कप्पंति दुन्नि दव्वाणि। एगं समुचियमन्नं, बीयं पुण फासुयं नीरं।१०५।" अत्र लघुवृत्तौ (८३ पृष्ठे) "एकं 'समुचितं' स्वशरीरस्य प्रस्तुततपसो वाऽनुकूलत्वेन प्रायोग्यं 'अन्नं' उत्तममध्यमजघन्यरूपं कलमशाल्यादि, द्वितीयं पुनः 'प्रासुकं' त्रिदंडोत्कलितत्वेन भावकद्रव्यसम्पर्कोत्पन्नवर्णान्तरितत्वेन वाऽचित्तीभूतं, समुचितमिति विशेषणमत्रापि योज्यते, ततश्च प्रासुकं समुचितं च नीरमित्यर्थः. तथा प्रासुकमेव, न तु सचित्तं, प्रासुकमपि समुचितमेव, न त्वनुचितं, तिलोदकयवोदकतण्डुलोदककरीरोदकसक्करोदकसंस्वेदिमोदकं द्राक्षाखर्जूरदाडिमचिंचागुडखण्डादिधावनजलं वा, एतानि हि जुगुप्सनीयत्वेन गृहस्थैः पीयमानानि धर्मकुत्साहेतव एवेत्यनुचितानि, यतीनां तु भिक्षाचरत्वेनोचितानि, उचितमपि नीरमेव, न तु काञ्जिकावस्रावणतक्रेक्षुरसादीनि, तेषां हि पानकाऽऽहारत्वेऽपि शुद्धयहेतुत्वेनाचमनादिकार्यानर्हत्वात्, अत एव प्रत्याख्यानचूर्णौ जलमेवोक्तं, यथा-जावइयं उवउज्जइ, तावइयं पायणे गहेऊणं। जलनिब्बुड्डे काउं, भुत्तव्वं एस इत्थ विही।१।" तथा 'सूरे उग्गए पुरिमड्ढं पच्चक्खामि चउव्विहंपि तिविहंपि आहारं असणं पाणं खाइमं साइमं अन्नत्थ० सह० पच्छन्न० दिसा० साहु० मह० सव्व० आयंबिलं पच्चक्खामि अन्नत्थ०. सह० लेवा० उक्खित्त० गिहत्थ० पारि० मह० सव्वसमा० एगासणगं पच्चक्खामि तिविहंपि आहारं' इत्यादि 'द्रव्य२ सेस सव्वनियम अन्नत्थ०सह०महत्तरा०सव्वसमाहिवत्तियागारेणं वोसिरामि' श्रीजेसलमेरुभाण्डागारे संवत् १२१५ वर्षे लिखितपुस्तिकायामयमाचाम्लपाठः, एतावताऽऽचाम्ले सर्वत्र द्रव्यद्वयमेवोक्तं, तद्द्वयातिरिक्तद्रव्यनिषेधः श्रीजिनपतिसूरिभिरप्युक्तः "आयंबिले पप्पडघुघुरिया वेढमिया इड्डरिया तक्काइ निसेहो २५।" भवत्पक्षे तु हीरविजयसूरिप्रसादीकृतप्रश्नोत्तरसमुच्चये तच्छिष्यपण्डितकीर्तिविजयगणिसमुचिते दशमप्रश्नोत्तराधिकारे इदमुक्तं-"आचामाम्लमध्ये शुण्ठीमरिचादिकं कल्पते तत्किं कारणेन स्वभावेन वेति? (प्रश्नः), अत्र

कारणं विनाऽपि कल्पते इति (उत्तरं) । तथा आचामाम्लमध्ये शुण्ठीमरिचादिकं कल्पते, पिप्पलीलविङ्गादिकं च न, तत्किं शास्त्राक्षरैः परम्परातो वेति ? (प्रश्नः) अत्र आचामाम्लमध्ये शुण्ठीमरिचादिकं कल्पते लविङ्गपिप्पलीहरीतकीप्रमुखं पुनर्न कल्पते तत्रैतत्कारणं ज्ञायते-यल्लविङ्गेषु दुग्धभक्तं दीयमानमस्ति, हरीतकीपिप्पल्यादिकं नालिकातोऽपक्कं सत् शुष्कीक्रियते, यथा युगन्धरीगोधूमादिपृथुको राद्धः सन्ना-चामाम्लमध्ये न कल्पते, युगन्धरीगोधूमादिकं तु राद्धं सत्कल्पते, इति (उत्तरं" हीरप्रश्ने ही० हं० मुद्रिते ७७ पृष्ठे), सम्भाव्यते अत्र 'शुण्ठीमरिचादिकं कल्पते' इत्युक्तेः पुरातनशास्त्रोक्तमनङ्गीकुर्वाणाः स्वमतानुरागान्धकारसम्भारविलुप्तविवेकदृशो भवत्पूर्वजाः विवेकि-नामपाकर्णनीया एव भवन्ति, नहीदं शास्त्रमनुसृत्य भवद्भिः प्रणीतं, तस्मादेतदुपदेष्टुः रसलम्पटतैव प्रतिभातीति × । १ । ८ ।

९-" पौषधिकग्लानानां-पौषधिकानां मध्ये ये ग्लाना-असमर्थाः क्षुधं सोढुमशक्ता इति यावत्, तेषां भोजनप्रतिषेधनं च कृतं " एतत्खण्डन-विधिरयं-पौषधे भोजननिषेधः केनाक्रियत ?, अस्मद्गुरुभिः श्रीजिनवल्लभसूरिभिः प्रत्युत पौषधे भोजनप्रतिपादनात्, तथाहि-" जो पुण आहारपोसही देसओ सो पुण्णे पच्चक्खाणे तीरिए य खमासमणदुगेण मुहपोत्तिं पडिलेहिय खमासमणेण वंदिय भणइ 'इच्छाकारेण संदि-सह पारावह' पोरिसीपुरिमड्ढं चउव्विहारएकासणं निव्वियमायंबिलं वा जा काचि वेला तीए पारावेमि, तओ सक्कत्थएण चेइए वंदिय सज्झायं सोलसं वीसं वा सिलोगे काउं जहासंभवमतिहिसंविभागं दाउं मुहहत्थपाए पडिलेहिय नमुक्कारपुव्वमरत्तदुट्ठो भुंजइ " (पौषध-विधिप्रकरणे), परमुपधानमाश्रित्येदं पौषधे भोजनमादृतं, यद्यप्युपधानतपसि पौषधव्रतं श्रीमहानिशीथे नोक्तं तथापि समस्तगच्छीय-गीतार्थसम्मततया सर्वेष्वपि धर्मगच्छेषु नियतं, यथा स्वस्वोपधानदिनप्रमाणतया तत्स्वस्वतपोयोगविधिप्रकरणेषु गीतार्थैर्निबद्धं दृश्यते,

× यतो महानिशीथसूत्रे चूर्णौ च 'दोहिं दव्वेहिं अंबिलं' उक्तं, न तु दोकलमगदालीपप्पडसुंठीलवणहिंगुमरिचादिबहुद्रव्याणि ।

तैः कार्यमाणं चोपासकैरुपलभ्यते, तथाहि—"श्रावकश्राविकाणां तु एकस्मिन्नुपधाने अव्यूढेऽपि गुर्वाज्ञया अनुज्ञानन्दी विधीयमाना दृश्यते, परमेतैरहोरात्रपौषधदिनानि पश्चादपि शीघ्रं सविशेषं पूरणीयानी"ति श्रीमच्चन्द्रगच्छीयश्रीमदजितदेवसूरिनिर्मितयोगविधिप्रकरणे, तथा "पौषधग्रहणपुरस्सरमुपधानतपो विधेयमित्युपधानविधिरुच्यते" इति श्रीअभयदेवसूरिशिष्यपरमानन्दकृतसामाचारीग्रन्थे, तथा "पौषधक्रिया तु यद्यपि महानिशीथे साक्षान्नोक्ता, तथापि यथा साधोर्योगेष्वतिशायिक्रियात्वं सर्वप्रतीतं तथा श्राद्धानामपि उपधानेषु विलोक्यते" इत्याचारप्रदीपे रत्नशेखरसूरिकृते (१९ पत्रे), अन्यथा पौषधे उपवासकरणमेव न्याय्यं, तथा चोक्तं समवायाङ्गवृत्तौ (१९ पत्रे) श्रीगुरुचरणैः—"पौषधं पर्वदिनमष्टम्यादिस्तत्रोपवासोऽभक्तार्थः पौषधोपवास इति, इयं व्युत्पत्तिरेव, प्रवृत्तिस्त्वस्य शब्दस्याहारशरीरसत्काराब्रह्मचर्यव्यापारपरिवर्जनेष्विति ध्येयं" अस्मद्विचारणयोपधानतपोविशेषमन्तरेण पौषधे भोजनं न शिष्टं, येषां पुनर्मते भोजनाभ्यनुज्ञा तेषामप्यपवादत एव, नोत्सर्गतस्तथाचोक्तं तपागच्छीयश्रीसोमसुन्दरसूरिशिष्यमहोपाध्यायहेमहंसगणिकृतावश्यकबालावबोधे—"तृतीयशिक्षाव्रतं पौषधोपवासः, स च पर्वतिथिष्वहोरात्रं यावच्चतुर्विधाहारत्यागेन, तथा न शक्नोति चेत्तदा त्रिविधाहारपरित्यागेन, एवमप्यशक्तावपवादत आचाम्लादि सङ्घाय्यं भोजनं क्रियते" इदं पौषधव्रतं, अपवादपदं ह्युत्सर्गमार्गे निक्षिप्यते, तेन भवता पौषधेऽनुक्तं भोजनं किमिति स्वीकार्यते ?, विधिपथप्रवृत्तानामस्माकं ह्येपाश्रमदो वचः, पौषधमनुचार्यैकासनादितपः क्रियमाणं केन वार्यते ?, अथ च भोजनं तत्रोक्तं स्यादस्माभिर्वारितं भवति तदोत्सूत्रं, परमनुक्ताभ्यनुज्ञायां तवैवेदमापतितं, स्वीय एव बाणो भवन्तं प्रहरतीति न्यायः स्मारितः॥१।९।६॥

पोसहिअसावयाणं, जिणभणियतिकालदेववंदणयं । तत्थ उभयं चइत्ता, मज्झण्हे चेव वंदणयं[१०] ।७।

१०—"पौषधिकश्रावकाणां 'जिनेन'तीर्थकृता भणितं त्रिकालदेववन्दनकमस्ति, तत्र प्रातः सन्ध्यायां चेत्युभयं त्यक्त्वा, 'चेव' एवकारार्थे,

मध्याह्ने एव देववन्दनकं" इदमप्यज्ञानविजृम्भितं भवता विभाव्यते विदुषां पुरः, तत्र पौषधमध्ये श्रावकाणां प्रातः सायं प्रतिक्रमणस्यान्ते आदौ च यच्चैत्यवन्दनं तद्विना क्वापि जीर्णशास्त्रेऽन्यचैत्यवन्दनं नास्ति, सम्प्रति भवद्भिः प्रातः सायं तच्चैत्यवन्दनात्पृथक् चैत्यवन्दनं यदादिश्यते तद्वृथा, जीर्णशास्त्राभिप्रायेण प्रतिक्रमणाद्यन्तचैत्यवन्दने चैत्यगृह एवोपदिष्टे स्तः, यदुक्तं श्रीउत्तराध्ययनेषु षड्विंशाध्ययने वृत्तिकृता-"यत्र चैत्यानि तत्र तद्वन्दनं विधेयं" तथा "जइ चेईहरे ठिया वियालियं कालं पडिकंता अकए आवस्सए गोसे कए य आवस्सए चेईए न वंदंति ता मासलहू" इति श्रीव्यवहारचूर्णौ पीठिकायां, तथा "जइ चेइयाइं अत्थि तो वंदंति" इत्यावश्यकचूर्णावपि, एतावता देवगृहचैत्यवन्दनव्यतिरिक्तप्रतिक्रमणचैत्यवन्दने न स्तः, आद्यन्तयोश्चैत्यवन्दनयोः सतोर्यत्त्वयाऽधिकक्रियोपदेशः क्रियते तत्त्वैवोत्सूत्रं, मध्याह्नचैत्यवन्दनं तु श्रीजिनवल्लभसूरिभिरप्युक्तं पौषधविधिप्रकरणे-"तओ पउणपोरिसीए खमासमणेण संदिसाविय खमासमणपुव्वमेव पडिलेहणं करेमित्ति भणिय मुहणंतगं पडिलेहित्ता खंभविभंडोवगरणं पडिलेहेइ, मज्झे सव्वत्थ सज्झाओ, जाव कालवेला, तओ जइ चेईहरे देववंदणं न कयं ? तो तं करेइ चिइवंदणं" इति त्रिकालचैत्यवन्दनं साक्षादेवाख्यातमपलप्य कोऽयं तवाधिकचैत्यवन्दनाऽऽक्षेपः ?, अन्यथ क्रियाविशेषादधिकं चैत्यवन्दनद्वयमभ्युपगन्तव्यं चेत् ? तर्हि साधूनामपि तपोयोगसमये तदधिकं निर्देष्टव्यमायातं, क्रियाविशेषस्योभयत्रापि समानत्वात् । २ । १० । ७ ।

आयरियं मोत्तूणं, न जुज्जइ पइट्ठपमुहमहकिच्चं[11-12] । इच्चाइ[13] नूणकिरिया, उस्सुत्तं तम्मए णेयं । ८ ।

११-१२-१३ "आचार्यं मुक्त्वा न युज्यते प्रतिष्ठाप्रमुखं 'महःकृत्यं' महोत्सवकृत्यं, प्रमुखग्रहणान्मालारोपणादिपरिग्रहः, इत्यादि न्यूनक्रियारूपमुत्सूत्रं ज्ञेयं, आदिशब्दाद् गोचर्यादौ पतद्ग्रहग्रहणनिषेधादिकं मन्तव्यं" तदप्ययुक्तं, श्रीजिनदत्तसूरिभिरुत्सूत्रपदोद्घट्टनकुलके-"न्हवण-

यरसिहावंयो, मुद्दाकलसेसु वासखेवाइ । सूरी विणा पइठ्ठं, कुणइ अ उस्सुत्तमाईयं ।१७।" सूरिभिर्विना प्रतिष्ठा यदि स्यात्तदा प्रतिमानां पश्चाद्भागे अमुकसाधुनेयं प्रतिष्ठितेति साक्षात्प्रतीयेत, नामुकगच्छीयैरमुकाचार्यैः प्रतिष्ठितेति, दृश्यते आचार्यप्रतिष्ठैव, प्रयोगश्चात्र–प्रतिमाप्रतिष्ठा सूरिभिरेव कृता भवति, तथैवास्खलत्प्रत्ययेन प्रतीयमानत्वात्, यद्यथैवास्खलत्प्रत्ययेन प्रतीयमानं तत्तथैव प्रमाणगोचरतयाऽभ्युपगन्तव्यं, यथा घटो घटरूपतया प्रतीयमानो घटतयैव प्रमाणगोचरोऽभ्युपगम्यते, न पटतया, तथैवेयं प्रतिष्ठा सूरिभिरेव कृताऽध्यक्षेण प्रतीयते, तेन सूरिभिरेव कृताभवति, न च दृष्टऽनुपपन्नं नाम, न च प्रत्यक्षप्रवृत्तावन्यत्प्रमाणं प्रवर्त्तितुं प्रगल्भते, तदनुगामित्वात्सर्वप्रमाणानां, तथा श्रीउमास्वातिवाचककृतप्रतिष्ठाकल्पे–"रूप्यकचोलकस्थेन, शुचिना मधुसर्पिषा । नयनोन्मीलनं कुर्यात्, सूरिः स्वर्णशलाकया ।१।" इति, तथा त्रिषष्टिशलाकाचरिते द्वितीयपर्वणि श्रीहेमाचार्या अप्यूचुः "गन्धाँश्च चूर्णवासाँश्च, चक्रे चिक्षेप चक्रभृत् । प्रतिमायामिवाचार्यः, प्रतिष्ठासमये स्वयं ।१।" तथा जीवानुशासनवृत्तावप्याचार्यप्रतिष्ठैवोक्ता, तथा च तत्पाठः (मुद्रिते ६ पृष्ठे) "किञ्च आचार्यप्रतिष्ठाकरणे श्रीमदुमास्वातिवाचकसमुद्रसूरिहरिभद्राचार्यादिरचिताः प्रतिष्ठाकल्पाः दृश्यन्ते" इति, अन्यच्च–(तत्रैव) "एमेव य सव्वोणवि, जिणाण पडिमासु पढमपट्ठवणे । मा परवाई विग्धं, करेज्ज वाई तओ विसइ ।१। कंठ्या । सावओ कोइ पढमं जिणपडिमाए पइट्ठवणं करेइ ?" इति बृहत्कल्पभाष्यचूर्णि (पाठः) × × "अत्र संझिद्वारेणैव प्रयोजनं, तदर्थं व्याख्यानायाह–तत्थ य पढमं ठवणं, पढमं णसणं भणंति समयविऊ । पुव्वं पइट्ठियाए, रहंमि अणुयाण अहिगारा ।१३। व्याख्या–'तत्र' संझिद्वारव्याख्याने 'चः' पुनरर्थः, प्रथमं स्थापनं प्रथमं न्यासमारोपणमिति यावत्, 'भणंति' जल्पन्ति 'समयविदः' सिद्धान्तज्ञाः, 'पूर्वं' प्रथमं प्रतिष्ठितायाः क न्यसनं ?, 'रथे' जिनस्यन्दने अनुयानाधिकारात्, उक्तलक्षणाद्धेतोरेति गाथार्थः । स्यान्मतं, कथमिदं ज्ञायते ? यदुतास्यायमर्थो, न पुनर्मयोक्तः, अत आह–जइ पुण

पइट्ठअत्थो, हवेज्ज तो महुरणयरिगेहेसु । मंगलपडिमाणंपि हु, तुम्ह मया पावइ पइट्ठा ।१४। व्याख्या–'यदि पुन'रिति पराभिप्रायाश्वासनार्थः, प्रतिष्ठालक्षणो'ऽर्थो'ऽभिधेयो 'भवेत्' जायेत ततो 'मथुरानगरीगेहेषु' मथुराभिधानपत्तनसदनेषु मङ्गलप्रतिमानामपि, न केवलं तव सम्मतानामित्यपि शब्दार्थः, हुः पूरणे, 'युष्माकं' भवतां 'मता'दभिप्रायात्प्राप्नोति प्रतिष्ठा भवत्सम्मता, अत्राप्यस्य विद्यमानत्वादित्यभिप्रायः, मङ्गलप्रतिमाश्चेह ता उच्यन्ते यासामकरणे गृहस्योपद्रवादिकं भवति, यथाऽत्र देशरूढ्या गृहद्वारस्योपरि विनायकमूर्तिर्वास्तुविद्योपदेशात् क्रियते तथा मथुरायां गृहे गृहे पार्श्वनाथजिनप्रतिमा ब्राह्मणादिभिरपि गृहद्वारस्योपरि कार्यन्ते, यदि न क्रियन्ते ततो गृहाणां पतनादिकं भवति, तथा च तत्रैव कल्पे भणितं मङ्गलचैत्यप्ररूपणावसरे 'महुराए नयरीए जिणपडिमाओ गिहे गिहे पइट्ठविज्जंति' प्रतिष्ठाप्यन्ते–न्यस्यन्ते इति भवतोऽपि सम्मतं, न हि तासां मिथ्यादृष्टिभिस्तव मम च सम्मतं प्रतिष्ठाविधानं क्रियते, एतदिहाकूतं–अस्य शब्दस्यात्र न्यसनमेव वाच्यं, किञ्च प्रथमशब्दस्य नैरर्थक्यं प्राप्नोति, नह्येकस्या एव प्रतिमाया द्वितीया प्रतिष्ठा क्रियते येन तद्व्युच्छित्तये प्रथमशब्दोपादानं क्रियते, अस्मत्पक्षे तु प्रथमं स्थारोपणं संभवत्येव, पूज्यास्तु व्याचक्षते 'अत्र करोतेर्भणनेऽपि कारापणं दृश्यं' ततश्च साधुभ्यः सकाशात् श्रावकः प्रतिष्ठां कारयतीत्यर्थः, यथा उमास्वातिवाचकोक्तार्यायामस्यां 'जिनभवनं जिनबिम्बं, जिनपूजां जिनमतं च यः कुर्यात्, तस्य नरामरशिवसुख–फलानि करपल्लवस्थानि ।१।' अत्र कुर्यादित्युक्तेऽपि कारयेदिति दृष्टव्यं, नहि श्राद्धः स्वयं जिनमन्दिरं तत्प्रतिमां वा करोति, एवमत्रापि, प्रथमशब्दसाफल्यं त्वेवं कथयन्ति–तेन श्रावकेण प्रथममेव प्रतिमा कारिता, निशीथेऽपि कारापणस्थाने करणशब्दप्रयोगः स्थाने स्थाने प्रतिपादित एवेति गाथार्थः" श्रीजीतानुशासने प्रथमाधिकारे (९-१०-११पृष्ठे), अत्र 'साधुभ्यः सकाशात् श्रावकः प्रतिष्ठां कारयती'त्युक्त्या साधुपदं श्रावकप्रतिष्ठाप्रतिषेधपरं "गिहीणमुचिआ जिणपइट्ठा"

इत्युत्सूत्रमित्युक्तेः, न साचार्यप्रतिष्ठाप्रतिषेधपरं, साधुशब्देनात्र आचार्य एव ग्राह्यो, न तु सामान्यमुनिः "व्याख्यानतो विशेषप्रतिपत्तिः, नहि सन्देहादलक्षण"मिति महाभाष्योक्तेः, तस्यैव च प्रतिष्ठाविधायिसूरिमन्त्रसद्भावात्, न तं विना चैत्यप्रतिष्ठोपदिष्टाऽस्ति शिष्टैः, सूरिर्हि साधुत्वे न व्यभिचरति, शिंशपात्वे वृक्षत्ववत्, अपरं गौतमपृच्छाटीकायामुक्तं "देवाहिदेवपडिमं, पहाणसिरिखंडदारुणा तेण । जह दिट्ठं कारवियं, तो एवमुत्ता महामच्चा ।१। देवाहिदेवपडिमं, एवं नवकारियं पइट्ठेही ? । को नाम तं पइ इमं, तयणु अमच्चेहिं विन्नत्तं ।२। अह रायगिहे देवाहिदेव आणं पडिच्छिवि इहेव । सो बंभरिसी कविलो, चिट्ठइ नयरीइ तुह आणा ।३। एस सियंबरपवरो, केवलनाणी मुणी सयंबुद्धो । तुह पडिमाइ पइट्ठं, करिही पुण्णोदओ अह हि ।४। तोऽवंति पहु अज्झ-त्थिएण कविलेण मुणिवयंसेण । पडिमा पइट्ठिया सा, जहाविहाणेण तत्थ सयं ।५।" एतावताऽपि श्वेताम्बरप्रवरस्य केवलिन एव प्रतिष्ठा प्रोक्ता, न सामान्यसाधोरिति ।२।११।

१२–१३ 'सूरिमन्तरेण मालारोपणं न युज्यते तदुत्सूत्रं' तदप्यसत्, सूरिरेव महानिशीथे गुरुशब्देनोक्तस्तथाहि "तओ जगगुरूणं जिणिंदाणं पूयगदेसाओ गंधड्ढाऽमिलाणसियमल्लदामं गहाय सहत्थेणोभयखंधेसुमारोवयमाणेणं गुरुणा णिस्संदेहमेवं भाणियव्वं, जहा–भो भो जम्मंतरसंचियगुरुपुण्णपब्भारसुलद्धसुविढत्तसुलहमणुयजम्मदेवाणुप्पिया ! ठइयं च नरयतिरियगइदारं तुज्झं ति, अबंधगो य अजसकित्ती-नीयागोत्तकम्मविसेसाणं तुमं ति" इत्यादिना पाठेन फलोपदेष्टा गुरुराचार्यः एवेत्यर्थापत्त्या विदन्नपि किमपलपसि ? कदाग्रह ग्रस्त; तस्मात्स्वीकुरु मालारोपणमाचार्यकृतमेवेति । तथा आदिपदात्सिक्थपटलकाग्रहणरूपमुत्सूत्रं × मासकल्पाऽविहारप्ररूपणाधिकारे पञ्चलिङ्गीविवरणोक्ताचरणाद्वारेणैव प्रतिक्षिप्तमिति साधूक्तं । १ । १२–१३ । ८ ।

×जीवयत्नादिविधायिनीं घटझोळीं विना केवलोद्घाटितघटेन ये जलमानयन्ति तज्झोलिग्रहणनिषेधोत्सूत्रं स्वकीयं मूढेन किं न दर्शितं?

अह वीयमहिअकिरियं, रयणीपोसहियरत्तिअवसाणे । सामइयं कायव्वं¹, इय भणियं तेण मूढेण ।२।

१४—" अथाधिकक्रियारूपमुत्सूत्रं, तथाहि-'रयणीपोसहिअ'त्ति किल रजनीपौषधिकेन रात्रिपश्चिमप्रहरे सामायिकं कर्तव्यमिति तेन मूढेन भणितं" तदपि महामोहप्रमादिप्रलपितप्रायं, यतो नाधिका क्रिया क्रियतेऽस्माभिः, यथोक्तक्रियाकरणे दूषकत्वं भवतो दोषायैव, पौषधिकस्य पश्चिमरजन्यां सामायिकग्रहणविधिरयं श्रीजिनवल्लभसूरिभिः पौषधविधिप्रकरणे प्रोक्तं "तओ राइए चरमजामे उट्ठिऊण इरियावहियं पडिक्कमिय सक्कत्थएण चेइए वंदिय पुत्तिं पेहिय नमुक्कारपुव्वं सामाइयसुत्तं कड्ढिय संदिसाविय सज्झायं कुणइ, जाव पडिक्कमणवेला, तओ उ पुव्वविहिणा पडिक्कमिय पडिलेहणाइयं करेइ" इति, तथा पञ्चाशकचूर्णावपि "तओ राईए चरमजामे उट्ठिऊण इरियावहियं पडिक्कमिय पुव्विं पोत्तिं पेहिय नमुक्कारपुव्वं सामाइयसुत्तं कड्ढिय संदिसाविय सज्झायं कुणइ" इति, तथा श्रीजिनप्रभसूरिभिर्विधिप्रपायामप्युक्तं "तओ पच्छिमरयणीए उट्ठिय इरियावहियं पडिक्कमिय कुसुमिणदुस्सुमिणकाउस्सग्गं सयउस्सासं मेहुणसुमिणे अट्ठुत्तरसयउस्सासं करिय सक्कत्थयं भणिय पुव्वुत्तविहीए सामाइयं काउं सज्झायं संदिसाविय ताव करेइ जाव पडिक्कमणवेला" इति, एवंविधे रात्रिपौषधिकस्य सामायिकग्रहणविधौ विद्यमाने कथं तन्निषेधमुखो भवसि ?, अन्यच्च युक्तिरप्यत्र युक्तोच्यते—गतरात्रेर्मुहूर्तेऽवशिष्ट एव तेन सामायिकानुगतं पौषधं जगृहे, सामायिकस्य च जघन्यतोऽवस्थानं मुहूर्तमात्रं, ध्यानशतके ध्यानस्यैतत्कालमानस्यैवोक्तत्वात्, उत्कृष्टतस्त्वष्टौ यामान् यावत्, ततोऽस्यां पौषधिकरात्रौ मुहूर्तावशिष्टायां सामायिकपूर्णता वृत्ता, ततः पूर्वसामायिकावधौ पूर्णे पुनः सामायिकं यदि गृह्णीते तदा न्याय्यमेव, पर्वदिनमाश्रित्य यदि पौषधं जिघृक्षुर्भवति तदा पौषधमपि गृह्णन्तु, पौषधग्रहणसमयस्तु मुहूर्तावशिष्टरात्रिभाग एवोत्सर्गतो, यदि तेन च पौषधं न गृहीतव्यं तर्हि पूर्वगृहीतपौषधं प्रातरपर्वण्यपि पारयतु, तत्समय एव तत्पारणविधेरुक्तत्वात्, ग्रहणं

तु पर्व्वण्येव पौषधस्य, पूर्वगृहीत पौषधावस्थानं त्वपर्व्वण्यपि पारणमपेक्षते इदं तु प्रासङ्गिकमुक्तं, गद्गाथान्ते भवता मूढत्वमज्ञानिना प्रतिपादितं श्रीजिनवल्लभसूरीणां तत्त्वेवायातं तत्त्वतः ।२।१।९।

**सामाइयं कुणंतस्स, नमुकारतिअदंडकउच्चरणं[2-3] । उवहाणुव्वहणं[4] पुण, जइणो गिहिणोव्व इहमऽहिअं ।१०।**

१५–१६–"सामायिकमुपलक्षणात्पौषधं कुर्वतः श्राद्धस्य नमस्कारत्रयपूर्वकं दण्डकोच्चारणमर्थात्रिवारमिति" युक्त्यागमविरुद्धत्वेनेदमपि खण्ड्यमानं शृणु–सामायिकव्रतं गृह्णता श्रावकेण जू(जी)र्णप्यावश्यकवृत्त्यावश्यकचूर्णिप्रमुखग्रन्थेषु 'नमस्कारोच्चारणं पुरा क्रियत' इत्युक्तं नास्ति, तथापि सम्प्रदायादर्वाक्तनेषु ग्रन्थेषु सामायिकपौषधस्वीकारे नमस्कारपूर्वकता दृश्यते, तथा चोक्तं पौषधविधिप्रकरणे "इच्छाकारेण संदिसह पोसहमुहपत्तियं पडिलेहेमि त्ति भणिय बीयखमासमणपुव्वं पुत्तिं पडिलेहिय खमासमणेणं पोसहं संदिसाविय बियखमासमणेणं 'पोसहे ठामि'त्ति भणित्ता खमासमणं दाउं उद्धट्ठिओ ईसिमोणयकाओ गुरुवयणमणुभणंतो नमुक्कारमुच्चरिय. भणिय 'करेमि भंते ! पोसह'मित्यादि पुणो पोसहेव सामाइयमुहपुत्तिं पेहित्ता खमासमणे■ सामाइयं संदिसाविय बीयखमासमणपुव्वं 'सामाइए ठामि'त्ति वुत्तुं खमासमणदाणपुव्वं उद्धावणयगत्तो पंचमंगलं कड्ढित्ता भणइ–'करेमि भंते ! सामाइयं, सावज्जं जोग'मित्यादि" एवं सर्वगच्छेष्वपि नमस्कारपूर्वकता दरीदृश्यते, अन्यथावश्यकबृहद्वृत्तौ (८३२ पत्रे) सामायिकमुच्चरता "एताए विधीए गत्ता तिविधेण णमिऊण साधुणो पच्छा सामाइयं करेति–'करेमि भंते ! मामाइयं सावज्जं जोगं पच्चक्खामि दुविहं तिविहेणं जाव साहू पज्जुवासामि'त्ति" एवं "वोसिरती"–त्यादिना, तथा पञ्चाशकवृत्तावप्येवं–"अनेन विधिना गत्वा त्रिविधेन साधून्नत्वा सामायिकं करोति–'करेमि भंते ! सामाइयं सावज्जं जोगं पच्चक्खामि जाव साहू पज्जुवासामि दुविहं तिविहेण"मित्यादिना (२३ पत्रे), तथा आवश्यकचूर्णौ (मुद्रितायां उत्तरार्द्धे २९९ पृष्ठे)

"एताए विहीए गंता तिविहेण साहुणो णमिऊण पच्छा साहुसक्खियं सामाइयं करेति 'करेमि भंते! सामाइयं सावज्जं जोगं पच्चक्खामि दुविहं तिविहेणं जाव साहू पज्जुवासामि'त्ति काऊण, जइ चेइयाइं अत्थि तो पढमं वंदती"त्यादिना, तथा नवपदाविवरणे (२४३ पत्रे) श्रीयशोदेवोपाध्यायैः "आगतश्च त्रिविधेन साधून्नमस्कृत्य तत्साक्षिकं सामायिकं पुनः करोति–करेमि भंते! सामाइयं सावज्जं जोगं पच्चक्खामि दुविहं तिविहेणं जाव साहू पज्जुवासामी"त्यादिना, च पाठेन "सामायिकं करोती"त्युक्तं, अत्र बहुत्वं न दर्शितं, यद्यपि त्रित्वे पर्यवसानं भवति 'कपिञ्जलाधिकरण'न्यायेन, तथापि व्यवहारसिद्धान्ते चतुर्थोद्देशके (५८ पत्रे ३०९ भाष्यगाथायाः) "सामाइयं तिगुणमट्ठ-गहणं चे"ति पादव्याख्यायां तट्टीकाकारिभिः श्रीमलयगिरिभिर्दीक्षाग्रहणादौ ("त्रिगुणं-त्रीन् वारान् सामायिकमुच्चारयती"त्यनेन) त्रिःकृत्वः सामायिकोच्चारणं दर्शितं, तथा निशीथचूर्णौ "एवं अहा(हायं)जायं वामपासे ठियस्स आयरिओ भणेइ 'इमस्स साहुस्स सामाइयस्स आरुहावणं करेमि काउसग्गं' अन्ने भणंति 'उच्चारावणं करेमि काउस्सग्गं' उभयथावि अविरुद्धं, अन्नत्थूससिएणं जाव वोसिरामि त्ति, लोगस्सुज्जोयगरं चिंतेत्ता 'नमो अरिहंताणं' पाढेत्ता पच्छा पव्वावणऽज्जेण समं सेहो सामाइयं तिक्खुत्तो कड्ढइ" एवमिहापि, यथा साधोस्त्रिःकृत्वः सामायिकोच्चारणं निर्दिष्टं तथा श्रावकस्यापि तदनुगामिक्रियाकरणोपदेशेन त्रिःकृत्वः सामायिकोच्चारणं घटत एव, व्रतोच्चारणविधिस्तु सर्वेषां सम एव बोधव्यः, सम्यक्त्वशीलव्रताद्युच्चारे त्रिःकृत्वः पाठोच्चारणं भवत्पूर्वजैरप्यादृतमेव, अपरं यत्र सामान्यतः 'सामायिकमुच्चरती'त्युक्तं तत्रापि त्रीणि सामायिकानीत्यवसीयते. तथा चोक्तमोघनिर्युक्तौ (८३ पत्रे) "सामाइय उभयकायपडिलेहा" इति पाठे सामान्यतः सामायिकशब्द उक्तः परं वृत्तिकृता श्रीद्रोणाचार्येण "सामाइय त्ति–सामायिकं वारत्रयमाकृष्य स्वपिती"ति व्याख्यातं, तथोत्तराध्ययनेषु षड्विंशेऽध्ययने (बृहद्वृत्तौ ५४९ पत्रे) प्रतिक्रमणाध्ययनाधिकारे "काउस्सग्गं तओ कुज्जा" अयं पाठस्तु सामान्यतः कायोत्सर्गाभि-

ण्यपि टीकाकृता "कायोत्सर्गो-चारित्रदर्शनश्रुतज्ञानशुद्धिनिमित्तं व्युत्सर्गत्रयं, जातावेकवचनं, ततो-गुरुवन्दनादनन्तरं कुर्या"दिति व्याख्यातस्तद्वत्रापि सामान्यतः सामायिकाभिधानेऽपि सम्प्रदायात्त्रित्वमवसेयं, तथा यदा रात्रिपौषधिकश्रावकेभ्यः शयनाभ्यनुज्ञाऽवसरे सामायिकव्रतोच्चारे कर्तव्ये सामायिकदण्डकत्रयमुच्चार्यते तदा सदा सामायिकव्रतमुच्चारयद्भिः सद्भिः किं न सामायिकत्रयमुच्चार्यते ?, तथा श्रीजिनवल्लभसूरिभिः सामायिकाधिकारे "पंचमंगलं कड्डित्ता भणइ-करेमि भंते ! सामाइयं"इत्यादि पाठे पुरा नमस्कारकथनपाठस्तथाऽऽवश्यकचूर्ण्याद्यनुसारेण सामायिकदण्डकपाठश्च पठितस्तदभिप्रायस्तु तदीयैश्शिष्यैरेवावसीयते, न परैः, अत एव तदपेक्षया युवापर्यैस्तत्पट्टमकाधनममाकरप्रायैः श्रीजिनपतिसूरिभिरप्युक्तं "पडिक्कमणमाइसु सामाइयदंडगो नवकारो य वारतिगं भणिज्जइ" इति गुरुपारम्पर्यमाकल्पस्थिरविबुधैर्जिनपतिसूरिप्रणीतसामायिकनवकारत्रयसाक्षाद्वलोकनरूपहेतुना श्रीजिनवल्लभसूरीणां तत्त्रित्वभणनाभिप्रायोऽनुमीयते, धूमेन क्षितिधरकन्धरायां विभावसुप्रतिभानवत्, न च गुरुशिष्ययोरभिप्रायो विसंवदतीति, एवं श्रीजिनप्रभसूरिश्रीतरुणप्रभसूरिप्रभृतिमहानुभावैः सामायिकग्रहणाधिकारे इदमेव लिख्यतेस्म, तेन नात्र दोषकणिकासम्भव इति, एवमुपलक्षणोपात्तपौषधग्रहणेऽपि सामान्यपाठमवलोक्य न व्यामूढैर्भाव्यं, पूर्वनिदर्शितोपनिर्युक्त्युत्तराध्ययनाद्यवयवपाठव्याख्यावद्त्रापि नमस्कारत्रयं पौषधदण्डकत्रयञ्च व्याख्येयं, व्रतत्वाविशेषात्, एकत्र दृष्टो न्यायः सर्वत्रापि प्रवर्तते इति, तरुणप्रभसूरिप्रभृतिग्रन्थकारकृतग्रन्थेषु तथा दर्शनाच्च× ।२१२-३।

१७–१८–"यतेर्गृहिण इवोपधानोद्वहनमिहाधिकं, उपलक्षणात्प्रतिदिवसं विशेषतः पाक्षिकचतुर्मासादिपर्वदिवसेषु च जलच्छटाक्षेपादिना श्रीआचारांगपि बोद्धव्यं" तत्र साक्षादुक्तोपधानविधेर्बहुवक्तव्यत्वादल्पवक्तव्यस्य 'सूचीकटाह'न्यायेनोपलक्षणपदात्क्षिप्तजलच्छटाक्षे-

× अधिकक्रियोत्सूत्रं अस्यैव नवीनमतेन अस्य मते चैत्यवन्दनचे "वारिज्जइ जइवि निआणादि" गाथात्रयाधिकपठनादिकं ज्ञेयं ।

पादेः परिहारविधिस्त्वयं-इदश्च ते उन्मत्तबालजल्पितप्रायं वचो न विद्वन्मनोरञ्जनाय प्रवर्त्तते, न चायं प्रतिदिवसं विशेषतः पाक्षिक-चतुर्मासिकादिपर्वदिवसेषु च जलच्छटाक्षेपेणास्मदीयेषु सामाचारीग्रन्थेषु प्रोक्तोऽस्ति, यदालोक्य तमस्मानाक्षिपसि, चक्षुस्त्रिवारण-शौचाचारप्रवृत्ती तु सदाचाराणामनिषिद्धे एव स्तः, ये पुनर्मलिनवृत्तयः शौचनामापि न सहन्ते ते तथा प्रवर्त्तन्तां, कस्तान् सत्पक्षान्तः क्षिपतीति शौचाचाराचरणेन यद्युत्सूत्रं स्यात्तदा सिद्धान्ततपोयोगाधिकारे ( × "तवतंबसीसरंसयलोहट्ठिय(?)लद्दिदचम्मरुहिराणं नहदंतमंसकेसऽट्ठिमुक्कसम्भिओहडावणऽत्थं करेमि काउस्सग्ग'मिति पठनं तदपनयनमपि कार्यं न स्यात्तच व्याख्याप्रज्ञप्तीपठनसमये स्पष्टतयोपदिष्टमस्ति, तत्रापीदं सम्मतमेवेति)। तथा गृहिण उपधानवहनमस्ति, न यतीनां, तदप्यसमीक्षिताभिधायित्वं स्वस्य स्वैरेव वाक्यैः प्रणयसि, (अस्ति)साधोरप्युपधानवहनंमेदस्तथाहि श्रीआचारप्रदीपे (१९ पत्रे) "तदेवं साधुभिः श्राद्धैश्चोपधानतपोऽवश्यकृत्यतया समस्तान्यतपोभ्यः प्रथममेव सम्यगाराध्यं, निर्वाहार्थं बहुगृहकृत्यादिवैयग्र्येण प्रमादादिना वा ये उपधानं नोद्वहन्ते तेषां नमस्कारगुणनदेववन्दनेर्यापथिकीप्रतिक्रमणादिजन्ममध्ये कदापि न शुद्ध्यतीति, भवान्तरे तेषां तल्लाभोऽपि दुस्सम्भवो, ज्ञानविराधकानां ज्ञानदुष्प्राप्यतायाः प्रतीतत्वात्, तेन ज्ञानाराधनार्थिभिरुपधानविधौ सर्वशक्त्या यतनीयं" तथा योगविधिप्रकरणेऽपि-"तथा ये शक्तिमन्तो धृतिमन्तश्च ते षडप्येतान्युपधानानि तत्र पूर्वभणिततपोभिरेव विच्छेदमकुर्वाणा वहन्ति, अन्ये त्वन्येन तपसा सान्तरमप्येतत्परिमाणं तपः पूरयन्तितरां, साधवः पुनरुपधानमध्ये विकृतिं न गृह्णन्ति, द्विभक्तमेकपक्कं वा, आलोचनापाक्षिकादितपोमध्ये न लगति. किञ्च श्राद्धः श्रद्धालुर्विशुद्ध-

× एतत्कांउसग्गस्यपाठस्थाने-"योगवाहिनां स्वाध्यायकारिणां च साधूनामशुचिरुधिरामिषास्थ्यादीनामपि दूरापसारणं न भवेद्यमपि शौचाचार एव, सोऽपि निषिद्धो भवतु, भवत्पूर्वजैश्च तदपनयनं योगविधिप्रकरणेऽभ्युपगतमिति" प्रत्यन्तरे पाठान्तरम्।

मनागशाविराशःनिरादिनो द्विभक्तादिनाप्युपधानतपः पूरयति, यतः "एक्केण सुद्धअच्छंऽबिलेण इयरेहिं दोहिं उववासो। नवकार नहिं४२हिं, पमत्ताचीसाउ उववासो।१। आयरणाओ नेयं, पुरिमड्ढेहिं सोलसेहिं उववासो। एक्कासणगा चउरो, अट्ठ य बिक्कासणा तह न।२।" इत्यादि नव्यां भणितं, विशेषेणासौ सावद्यव्यापारं विकथां रौद्रध्यानञ्च परिहरन् विश्राममकुर्वन् अत्यन्तमुपधानत(स्त)पः कुरुते, दा यतः-"अन्नायारो विगहाइ, वज्जिओ रुद्दझाणपरिमुक्को। विस्सामं अकुणंतो, उवहाणं कुणइ उवउत्तो।१।" तथा "निखिल-नमस्कारादुपधानाविश्रामवहनानन्तरं पञ्चासमध्ये पनेपामनुज्ञानन्दी विधीयमाना विलोक्यते, श्रावकश्राविकाणां तु एकस्मिन्नुपधाने अप्यूढेऽपि गुरुनुज्ञया अनुज्ञानन्दी विधीयमाना दृश्यते, परमेतेऽहोरात्रपौषधदिनानि पश्चादपि शीघ्रं सविशेषं पूरणीयानी"ति साधो-रप्युपधानवहनमाख्यातं, तदेतत् नभसि विचित्रचित्रनिरननमिव कस्य नाम न हास्यावहं साधूपधाननिषेधविकल्पनं ?।२।४-५।१०।

अह अजहट्ठाणकिरिया, तइयं उस्सुत्तमत्थि दुत्थमए। काऊणं सामइयं, इरियावहियापडिकमणं १।११।

११.-"अयथास्थानक्रियारूपमुत्सूत्रं दुःस्थमते-खरतरमते, वर्तत इति गम्यं, तथाहि-सामायिकं कृत्वा ईर्यापथिकीप्रतिक्रमणं, अयथा-स्थानं [illegible] स्थानस्य [illegible] भवति यथाहि ईर्यायाः स्थानं सामायिककरणात्पूर्वसमयः सामायिकस्य च स्थानं ईर्याप्रतिक्रान्त्यनन्तरः समयः, तथा [illegible], पठ्यमानेऽपि" × अत्रैतद्वृत्तिकृता सूत्रे 'अत्थी'ति क्रियायां विद्यमानायां 'वर्तत इति गम्य'मित्यलेखि तत्सूत्र

× आवश्यकचूर्णिटीकाकारादिपूर्वाचार्यैः प्राक् 'करेमि भंते !' इत्यादिना सावद्यपापमलवर्जनं पश्चादीर्यापथिक्या शुद्धिं विधाय आलोचनगुरुवन्दनपठनादि महानिशीथेऽपि चैत्यवन्दनसज्झायध्यानादि प्रोक्तं तदप्यनेन खरोजेन दुःस्थखराकमतलंठेन अय-थास्थानक्रियोत्सूत्रं भणितं।

पाठमनवलोक्यैव, "स्थालिपुलाक"न्यायेन यथा तव स्वयं साक्षादुक्तेऽपि न प्रत्ययस्तथाऽन्यत्राप्यन्यथाऽवस्थिते वस्तुन्यन्यथा प्रत्ययः सर्वत्राप्यवगम्यते, तत्रायं खण्डनप्रकारः—सामायिकं कृत्वैवेर्याप्रतिक्रमणं सर्वशास्त्रेषु पश्योत्पश्यीभूय मा तिष्ठ, तथा आवश्यकबृहद्वृत्तौ श्रीहरिभद्रसूरिकृतायां तथा आवश्यकचूर्णौ तथा नवपदप्रकरणबृहद्वृत्तौ तथा प्रतिक्रमणचूर्णौ तथा श्रावकप्रज्ञप्तीवृत्तौ तथा श्रावकधर्मविधिप्रकरणे तथा योगशास्त्रवृत्तौ तथा श्रीहरिभद्रसूरिकृतपञ्चाशकवृत्तौ (श्रीखरतरगच्छगगनाङ्गणनभोमणिश्रीमदभयदेवसूरिकृतायां) तथा श्रावकदिनकृत्यवृत्तौ तथा श्रावकदिनकृत्यसूत्रे तथा पञ्चाशकचूर्णौ सामायिकपाठादन्वेवेर्यापाठो दृश्यते, तत्रावश्यकबृहद्वृत्ति(पत्र ८३२ गत) पाठस्त्वयं "इह सावगो दुविधो—इड्ढिपत्तो अणिड्ढिपत्तो य, जो सो अणिड्ढिपत्तो सो चेइयघरे साहुसमीवे वा घरे वा पोसहसालाए वा जत्थ वा विसमइ अच्छति वा निव्वावारो सव्वत्थ करेति, तत्थ चउसु ठाणेसु णियमा कायव्वं—चेइयघरे साधुमूले पोसहसालाए घरे आवासगं करेंतो त्ति, तत्थ जइ साहुसगासे करेति तत्थ का विही ?, जइ परं परभयं णत्थि जइवि य केणइ समं विवाओ णत्थि जइ कस्सइ ण धरेति मा तेण अंछवियच्छियं कज्जिहि त्ति, जइ य धारणगं दट्ठूण ण गिण्हइ, मा भंजिहि त्ति, जइ वावारं ण वावारेति, ताहे घरे चेव सामाइयं काऊण वचति एवं—पंचसमिओ तिगुत्तो इरियाए उवउत्तो जहा साहू भासाए सावज्जं परिहरंतो, एसणाए कट्ठं वा लेट्ठुं वा पडिलेहिउं पमज्जिउं, एवं आयाणे णिक्खेवणे खेलसिंघाणए ण विगिंचति, विगिंचंतो वा पडिलेहेति य पमज्जति य, जत्थ चिट्ठति तत्थवि गुत्तिणिरोहं करेति, एताए विधीए गन्ता तिविधेण णमिऊण साधुणो पच्छा सामाइयं करेति—'करेमि भंते ! सामाइयं, सावज्जं जोगं पच्चक्खामि, दुविहं तिविहेणं जाव साहू पज्जुवासामि'त्ति काऊण पच्छा इरियावहियाए पडिक्कमति, पच्छा आलोएत्ता वंदति आयरियादी जहारायणिया, पुणोवि गुरुं वंदित्ता पडिलेहित्ता णिविट्ठो पुच्छति पढति वा, एवं चेइयाइएसुवि,

नया सगिहे पोसहसालाए वा आवासए वा तत्थ णवरि गमणं णत्थि। जो इड्डीपत्तो सो सव्विड्डिए एति, तेण जणस्स अत्था होइ, आढिया य साहुणो सुपुरिसपरिग्गहेणं, जति सो कयसामाइओ एति ताधे आसहत्थिमादिणा जणेण य अधिकरणं वट्टति, ताधे ण करेति, कयसामाइएण य पाएहिं आगंतव्वं, तेण ण करेति, आगतो साधुसमीवे करेति, जइ सो सावओ तो ण कोइ उट्ठेइ, अह अहाभद्दओ एति ता पूया कया होउ त्ति भण्णति, ताहे पुव्वरइयं आसणं कीरइ, आयरियाणं उट्ठिया य अच्छंति, तत्थ उट्ठतमणुट्ठंते दोसा विभासियव्वा, पच्छा सो इड्डीपत्तो सामाइयं करेति अणेण विधिणा–'करेमि भंते ! सामाइयं सावज्जं जोगं पच्चक्खामि दुविहं तिविहेणं जाव नियमं पज्जुवासामि'त्ति, एवं सामाइयं काऊण पडिक्कंतो वंदित्ता पुच्छति, सो य किर सामाइयं कुणंतो मउडं अवणेति कुंडलाणि णाममुद्दं पुप्फतंबोलपावारगमादी वोसिरति" इत्येवं श्रीहरिभद्रसूरिभिश्चतुर्ष्वपि स्थानेषु सामायिकाधिकारे ऋद्धिमात्सानृद्धिमास्योः श्राद्धयोः सामायिकदण्डकपाठादव्यवहित एवेर्यापथिकापाठः स्पष्टीकृतः, तथा आवश्यकचूर्णिपाठलेशस्त्वयं (मुद्रितायामुत्तरार्द्धे २९९ पृष्ठे) "एताए विधीए गंता तिविहेण साहुणो णमिऊण पच्छा साहुसक्खियं सामाइयं करेति. 'करेमि भंते ! सामाइयं, सावज्जं जोगं पच्चक्खामि, दुविहं तिविहेणं जाव साहू पज्जुवासामि'त्ति काऊण, जइ चेइयाइं अत्थि तो पढमं वंदति, साहूणं सगासातो रयहरणं णिसिज्जं वा मग्गति, अह घरे तो से उवग्गहियं रयहरणं अत्थि, तस्स असति पोत्तस्स अंतेणं पमज्जइ, पच्छा इरियावहियाए पडिक्कमति, पच्छा आलोएत्ता वंदति आयरियादी जहारायणियाए त्ति" तथा (श्रावकधर्मप्रकरणवृत्तौ) "चैत्यालये स्वे:निशान्ते, साधूनामन्तिकेऽपि वा। कार्यं पौषधशालायां, श्राद्धैस्तद्विधिना सदा ।१। व्याख्या–'चैत्यालये' विधिचैत्ये, 'स्वे निशान्ते' स्वगृहेऽपि विजनस्थाने इत्यर्थः, ('साधूनामंतिके') साधुसमीपे, पोषो ज्ञानादीनां धीयतेऽनेनेति 'पौषधं' पर्वानुष्ठानं, उपलक्षणात्सर्वधर्मानुष्ठानार्थं 'शाला' गृहं-

पौषधशाला, तत्र वा तत्सामायिकं कार्यं श्राद्धैः, सदा-नोभयसन्ध्यमेवेत्यर्थः, कथं ?, विधिना-खमासमणं दाउं 'इच्छाकारेण संदिसह भगवन् ! सामाइयमुहपत्तिं पडिलेहेमि'त्ति भणिय बीयखमासमणपुव्वं मुहिं पडिलेहिय खमासमणेण सामाइयं संदिसाविय बीयखमासमणपुव्वं 'सामाइए ठामि'त्ति वुत्तुं खमासमणदाणपुव्वं अद्धावणयगत्तो पंचमंगलं कड्ढित्ता करेमि भंते ! सामाइयं, सावज्जं जोगं पच्चक्खामि, जाव नियमं पज्जुवासामि दुविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि'त्ति सामाइयसुत्तं भणइ, तओ पच्छा इरियावहियं पडिक्कमइ'इत्यादि पूर्वसूरिनिर्दिष्टविधानेन, अत्र ईर्यापथिकीं प्रतिक्रम्यैव सामायिकसूत्रोच्चारणं यत्केचिदाचक्षते तत्सिद्धान्तोत्तीर्णं, यत उक्तं आवश्यकचूर्णिबृहद्वृत्त्यादौ-'करेमि भंते ! सामाइयं सावज्जं जोगं पच्चक्खामि दुविहं तिविहेणं जाव साहू पज्जुवासामि'त्ति काऊण × × पच्छा इरियावहियाए पडिक्कमइ'त्ति, इच्चाइणायव्वं." तथा "आवश्यकचूर्ण्यादियुक्तसामाचारी चियं-सामायिकं श्रावकेण कथं कार्यं ? तत्रोच्यते श्रावको द्विविधोऽनृद्धिमान् ऋद्धिमांश्च, तत्राद्यश्चैत्यगृहे साधुसमीपे पौषधशालायां गृहे वा, यत्र वा चित्तं विश्राम्यति तिष्ठति वा निर्व्यापारस्तत्र करोति, चतुर्षु स्थानेषु नियमेन करोति-चैत्यगृहे साधुमूले पौषधशालायां गृहे वाऽऽवश्यकं कुर्वाण इति, एतेषु च यदि चैत्यगृहे साधुसमीपे वा करोति, तत्र यदि केनापि सह विवादो नास्ति. यदि भयं कुतोऽपि न विद्यते. यदि कस्यापि किञ्चिन्न धारयति. मा तत आकर्षापकर्षौ भूतां, यदि वाऽधमर्णमवलोक्य न गृह्णीयान्मा भाङ्क्षीदिति बुद्ध्या. यदि वा गच्छन्न किमपि व्यापारं व्यापारयेत्तदा गृह एव सामायिकं गृहीत्वा चैत्यगृहं साधुमूलं वा. यथा साधुः पञ्चसमितिसमितस्त्रिगुप्तिगुप्तस्तथा याति, आगतश्च त्रिविधेन साधून्नमस्कृत्य तत्साक्षिकं सामायिकं पुनः करोति. 'करेमि भंते ! सामाइयं, सावज्जं जोगं पच्चक्खामि, दुविहं तिविहेणं जाव साहुं पज्जुवासामी'त्यादिसूत्रमुच्चार्य तत ईर्यापथिकीं

प्रतिक्रामत्यागमनं चालोचयति, तत आचार्यादीन् यथारत्नाधिकतयाऽभिवन्द्य सर्वसाधूनुपयुक्तोपविष्टः पठति पुस्तकवाचनादि वा करोति, चैत्यगृहे तु यदि साधवो न सन्ति तदेर्यापथिकीप्रतिक्रमणपूर्वमागमनालोचनां विधाय चैत्यवन्दनां करोति, ततः पठनादि विधत्ते, साधुसद्भावे तु पूर्व एव विधिः, एवं पौषधशालायामपि, केवलं यथा गृहे आवश्यकं कुर्वाणो गृन्हाति तथैव गमनविरहितं, न चावश्यकं श्रावकस्य न सम्भवतीति वाच्यं, 'समणेण सावएण य, अवस्सकायव्वं हवइ जम्हा' इत्यादिवचनप्रतिष्ठितत्वादस्य, मुखवस्त्रिका मत्युपेक्षणपुरंश्च सर्वत्र सामायिकं साध्वादिसमीपे विधिना ग्राह्यमिति । ऋद्धिमाप्तस्तु चैत्यगृहं साधुमूलं वा महर्द्ध्यैवेति, येन लोकस्यास्था जायते, चैत्यानि साधवश्च सत्पुरुषपरिग्रहेण विशेषपूज्या भवन्ति, पूजितपूजकत्वाल्लोकस्य, अतस्तेन गृह एव सामायिकमादाय नागन्तव्यं अधिकरणभयेन हस्त्यश्वागनानयनप्रसङ्गात्, आयातश्च चैत्यालये विधिना प्रविश्य चैत्यानि च द्रव्यभावस्तवेनाभिष्टुत्य यथासम्भवं साधुसमीपे मुखपोतिकामत्युपेक्षणपुर्वं 'करेमि भंते ! सामाइयं सावज्जं जोगं पच्चक्खामि दुविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि जाव नियमं पज्जुवासामी'त्याद्युच्चार्येर्यापथिकीं प्रतिक्रम्य यथाराज्ञिकतया सर्वसाधूंश्चाभिवन्द्य प्रच्छनादिकरोति" इति पञ्चाशिकेकादशनवपदविहितायामोकेशगच्छीयककसूरिसन्तानीयोपाध्याययशोदेवविरचितायां नवपदप्रकरणवृत्तौ (मुद्रितायां २४३तमे पत्रे) तथा श्रावकप्रतिक्रमणचूर्णावपि चन्द्रगच्छीयश्रीविजयसिंहाचार्याः " वंदिऊण य गुरुणो च्छोभावंदणएण संदिसाविय सामाइयदंडगमणुकड्ढइ, जहा-'करेमि भंते ! सामाइयं, सावज्जं जोगं पच्चक्खामि, जाव नियमं पज्जुवासामि, दुविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि, तस्स भंते ! पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि' तओ इरियावहियाए पडिक्कमिउं आगमणं आलोइए, पच्छा जहाजेट्ठं साहुणो वंदेऊणं पढइ सुणइ वत्ति" एवं सर्वत्र समाचारो विधिः, तथा भवत्पूर्वजैः श्रीदेवेन्द्राचार्यैरपि (श्रावक)

दिनकृत्यप्रकरणे प्रोक्तं–"काऊण य सामाइयं, इरियं पडिक्कमिय गमणमालोए । वंदित्तु सूरिमाई, सज्झायावस्सयं कुणइ ।३०।" अत्रापि सामायिककरणादन्वेर्यापथप्रतिक्रमणं दर्शितं, तदेवं नभसि स्फटिते कियन्ति थिग्गलानि दास्यसि ?, विशेषार्थिना तस्मद्गुरुश्रीजयसोम-महोपाध्यायविरचितस्वोपज्ञेर्यापथषट्त्रिंशिका विलोकनीया, तत्राक्षेपपरिहारौ निस्तुषतया प्रतिपादितौ स्तः, तत्राऽत्र भ्रान्तिध्वान्तपदं श्री-महानिशीथसिद्धान्त एव, तथाहि–"अपडिक्कंताए ईरियावहियाए न कप्पइ चेव काउं किंचि वि, चियवंदणसज्झायज्झाणाइअं फलासा-यमभिकंखुगाणं" इत्यादि, "ईर्यापथिकायामप्रतिक्रान्तायां न कल्पत एव किञ्चिच्चैत्यवन्दना स्वाध्यायध्यानादि" इत्यागमवाक्येनास्मा-भिरेवमेवावधारितं–यच्चैत्यवन्दनकादिवत् किञ्चिच्छब्दसूचितानि सर्वाण्यपि धर्मकृत्यानि ईर्यापथिकाऽऽदिकान्येव, तेन सामायिकमपि तदादिकमिति तवाभिप्रायः, परमसत्प्रायः, कथं ?, "अपडिक्कंताए इरियावहियाए" इत्यादिसामान्यसूत्रं विशेषसूत्रमपेक्ष्य प्रवर्त्तते, यत्र विशेषविषयता न भवति तत्र सामान्यसूत्रप्रवृत्तिर्यत्र पुनर्विशेषविषयता तत्र सामान्यं न प्रवर्त्तते, यथा शब्दानुशासने "कर्मण्यण् (पा० ३–२–१)" इति सामान्य सूत्रं त्रिविधमपि कर्म यत्र भवति तत्र प्रवर्त्तते, यथा–कुम्भकारः शरलावः चर्चापारः, यथाऽत्राण् तथा 'गोदः कम्बलद' इत्यत्राप्यण् प्राप्नोति, उपपदे कर्मणः सद्भावात्, तत्प्रतिषेधस्तु "आतोऽनुपसर्गे कः (पा० ३–२–३)" इति सूत्रेण, तथाऽत्रापि, यद्वा साक्षाच्छिष्टेन लैङ्गिकस्य बाधः, यथा "अनचि च (पा० ८–४–४७)" इति सूत्रेण यरन्तर्भावाद्रकारस्या-नुमानिके द्वित्वे प्राप्ते "अचोरहाभ्यां द्वे (पा० ८–४–४६)" इति सूत्रेण निमित्तत्वेन कार्यितस्य बाधः, यथा वा यतिसामायिकसूत्रे सर्वसावद्ययोगव्यापारनिषेधरूपसामान्यसूत्रस्य "एगं पायं जले किच्चा एगं पायं थले किच्चा" इत्यादिसूत्रं विशेषतः प्रतिपादनाद्बाधकं भवति, तथाऽत्रापि सामायिके "पच्छा ईरियावहियाए पडिक्कमइ" इत्यादिसूत्रेण साक्षाच्छिष्टेन "अपडिक्कंताए ईरियावहियाए" इति

सूत्रे बाध्यते, तेनेदं भवता यद्यदुक्तं तत्तत्सर्वं युक्तिमुक्तमेवेति, (यतः सामायिके प्रागनुक्तेर्याऽकरणाच्च सज्झायप्रागुक्तेर्याऽकरणात्) ।३।१।१।१।

पक्खियपडणे पुण्णिम, पक्खियपडिकमणमजहट्ठाणम्मि[१]। वुड्ढीए पढमतिहि, पक्खियमेअस्स कुविकप्पो[२] ।१२।

२९—"पाक्षिकपाते पूर्णिमायां पाक्षिकप्रतिक्रमणं, अयथास्थाने, ज्ञेयमिति गम्यं" एतदप्यसारं निर्विचारश्च समूचिवान्, कथं ?, यदि पूर्णिमा न पर्वतिथिस्तदा चतुर्दशीहानौ चतुर्दशीकृत्यं त्रयोदश्यां विधीयेत, "क्षये पूर्वा तिथिर्ग्राह्ये"ति वचनात्, परं पूर्णिमाऽपि पर्वतिथिः, आचरणया हि पूर्णिमाविधेयं चतुर्दश्यामानिन्ये, तथाचोक्तं(श्रीहेमाचार्यगुरु)श्रीदेवचन्द्राचार्यैः श्रीठाणावृत्तौ "एवं च कालगायरिएहिं चउत्थीए पज्जोसवणं पवत्तियं समत्तसंघेण य अणुमण्णियं, तव्वसेण य पक्खियाईणि वि चउद्दसीए आयरियाणि, अण्णहा आगमुत्ताणि पुण्णिमाए" त्ति, तथा द्वादशकुलकवृत्तावप्युक्तं—"तत्र यदुक्तं कुग्रहस्वरूपाभिधानप्रस्तावे यदुत पौर्णमास्यामेव पाक्षिकादिप्रतिक्रमणमिति तद्यद्यागमोक्तत्वेनाभिधीयते तदा पर्युषणापर्वापि पञ्चम्यामेव विधेयं स्यात्, अथ तस्य चतुर्थ्यामाचरितत्वेन तच्चतुर्थ्यामेव तर्हि पाक्षिकाद्यपि चतुर्दश्यामेव; यतस्तैरेव गीतार्थैः कालिकाचार्यैश्चतुर्थ्यां पर्युषणानिर्वाहाय चतुर्दश्यामेव तदाचरितं, अन्यथा हि सिद्धान्ताभिहितस्य पञ्चकदशकस्य दशमपञ्चकस्यापरिपूर्तौ तच्चतुर्थ्यां न निर्वहेदिति विचारः, तत्सिद्धमेतत् पाक्षिकादिप्रतिक्रमणं चतुर्दश्यामेव कर्त्तव्यं, गीतार्थाचरितत्वात्, चतुर्थ्यां पर्युषणापर्ववदिति" (द्वितीयकुलकद्वादशमगाथाव्याख्याने), "अन्यच्च पूज्या इहार्थे वदन्ति—यदा सांवत्सरिकं पञ्चम्यामासीत्तदा पाक्षिकाणि पञ्चदश्यां सर्वाण्यभूवन्, × × साम्प्रतं चतुर्थ्यां पर्युषणा ततश्चतुर्दश्यां पाक्षिकाणि घटन्ते" इति श्रीजीवानुशासनवृत्तौ तृतीयाधिकारे (२१ पृष्ठे), तेन चैत्यपरिपाटिमुनिजनवन्दनपाक्षिकातिचारालोचनस्थानीयचतुर्थतपोविशेषविधानादिपाक्षिककृत्यं पाक्षिकपर्वत्वेनाचरितायाश्चतुर्दश्या हानौ सदागमाविगीतपूर्णिमारूपपाक्षिकतिथौ कार्यमिति सम्प्रदायः, सत्याश्च चतुर्दश्यां

उत्सूत्रखण्डनम्

पूर्वाचार्याचरणाविशेषाचस्यामेव पाक्षिककृत्यं विधेयं, आचरणाया अपि कथञ्चिदागमानुपातित्वात्, त्रयोदश्यां तु तत्कृत्यकरणे आगमाचरणयोरन्यतरस्याप्यनाराधितत्वं स्यात्, चतुर्मासिकचतुर्दशीहानौ श्रीजिनप्रभाचार्यैरप्येतस्या एव युक्तेरंशेन आश्रितत्वात्, तथाहि–"नवरं चाउम्मासिए चउद्दसीहासे पुण्णिमा जुज्जइ, तेरसीगहणे आगमआयरणाणं अन्नतरंपि नाराहियं होज्जा" इति, नन्वष्टम्या हानौ सप्तम्या अष्टमीकृत्यं कथं क्रियते ?, उत्तरतिथावेव क्रियतां, चतुर्दशीह्रासे पूर्णिमायामिव (इति चेत्) न, दत्तोत्तरत्वात्, पर्वतिथित्वं राकाया न गतमस्ति, तेन तद्धानौ तत्र क्रियते, अत्रत्वर्वागुत्तरतिथ्योरपर्वत्वे समानेऽपि सप्तम्यां तद्भोगबहुत्वेन वरं सप्तम्यामेवाष्टमीकृत्यकरणं, एतत्संवादिका इमा गाथा अपि श्रूयन्ते, तथाहि–"पज्जुसणे चउमासे, पक्खियपवऽट्ठमीसु कायव्वा। जाए उदए सूरो, ताउ तिहीओ न अन्नाओ ।१।" इति सूर्यप्रज्ञप्तौ, "भवइ जहिं तिहिहाणी, पुव्वतिहीविद्धिया य सा कीरइ। पक्खी न तेरसीए, कुज्जा सा पुण्णिमासीए ।१।" इति श्रीहरिभद्रसूरिकृत 'तत्त्वविचारसार' ग्रन्थे, "तिहिपडणे पुव्वतिही, कायव्वा जुत्ता धम्मकज्जेसु। चाउद्दसी विलोवे, पुण्णिमियं पक्खिय पडिक्कमणं ।१। तत्थेव पोसहविही, कायव्वा सावगेहिं सुहहेऊ। न हु तेरसीहिं कीरइ, जम्हाऽणाऽऽणाइणो दोसा ।२।" आचारप्रभायां उमास्वातिवाचककृतायां, तथा "छट्ठिसहिआ न अट्ठमि, तेरसिसहिअं न पक्खियं होइ। पडिवयसहियं न कया वि, इअ भणियं वीयरागेहिं ।१।" ज्योतिष्करण्डके, (अमावस्यापूर्णिमाहानौ चतुर्दश्यां पर्वतिथ्यां पौषधोपवासपाक्षिकप्रतिक्रमणादि न करणं किन्तु त्रयोदश्यां तत्करणं अयपास्थाने कुविकल्परूपं ज्ञेयं अस्य तपोभूतस्य सागरस्य)।३।२।

२१–"वृद्धौ च प्रथमतिथिः पाक्षिकमित्येतस्य-खरतरस्य कुविकल्पः" इदमप्यन्तरऽसारं, खरपुरीषवत्, वृद्धौ प्रथमा तिथिः कथं न गृह्यते ?, उदयास्तमनयोरपि तत्तिथेर्वर्तमानत्वात्प्रथमातिक्रमे कारणाभावाच, भवता हि वृद्धौ योत्तरा तिथिः सा तावदल्पाऽपि गृह्यते तत्र

किं बीजं ?, न च वाङ्मात्रतः प्रोक्तं प्रमाणी करोति कश्चित्, वृद्धिं विनाऽन्या तिथिरादित्योदयवेलायामल्पाऽपि ग्राह्या, तथाचोक्तं 'नारदीयपुराणे' रुक्माङ्गचरित्रे तिथिनिर्णयाधिकारे-"एतच्छ्रुतं [illegible] विप्र !, कृष्णद्वीपायनात्पुरा । आदित्योदयवेलायां, या च स्तोका तिथिर्भवेत् । पूर्णा इत्येव मन्तव्या, प्रभूता नोदयं विना । पारणे मरणे नृणां, तिथिस्तात्कालिकी स्मृता । पैत्र्येऽस्तमनवेलायां, स्पृशन् पूर्णैव गम्यते ! । न तत्रोदयिनी ग्राह्या, दैवे चौदयिकी तिथिः" इति, अन्यच्च वृद्धौ (पूर्वतिथौ) पाक्षिकं क्रियते इदं किं ?, सर्वा अपि तिथयो वृद्धौ पूर्णत्वात्पूर्वा एव मान्यत्वेन ग्राह्याः सन्ति, किमेकदेशदूषणाय तवेयं प्रवृत्तिः ?, (अमावास्यावृद्धौ एवं च पूर्णिमावृद्धौ पापकृत्यकरणाय चतुर्दश्यां पौषधोपवासादिधर्मकृत्यानि पाक्षिकप्रतिक्रमणं च निषेध्य प्रथमअमावास्यायां प्रथमपूर्णिमायां च पाक्षिकप्रतिक्रमणादिकरणं अस्य तपोभूतस्य सागरस्य अयथास्थाने अस्य मतेन उत्सूत्ररूपं अनेन मानितं अंगीकृतं ) । ३ । ३ । १२ ।

सावणवुड्ढीए पुण, पज्जोसवणंपि सावणे तस्स[४] । भद्दवयवुड्ढि पढमे, भद्दवए[५] तेण तं वुत्तं ।१३।

२२-"श्रावणवृद्धौ श्रावणमास एव 'पज्जोसवणं'ति पर्युषणापर्व, 'अपिः' एवार्थे द्रष्टव्यः" इदमपि महाशङ्खवद्गाडम्बरपल्लवितं, पूर्वं श्रावणस्य जैनसिद्धान्तापेक्षया वृद्धिरेव नास्ति, पौषापाढयोरेव वृद्धिश्रवणात्, सम्प्रति(लोके)सकलमासवृद्धौ श्रावणस्यापि वृद्धिस्सम्भवति, [illegible] च तद्वृद्धावपि पञ्चकदशकव्यवस्थायां पञ्चाशता दिनैरेव पर्युषणा कर्त्तव्याः, तथाचोक्तं श्रीकल्पसूत्रे (दे० ला० पु० फं० द्वारा मुद्रिते ५८ पत्रे) "तेणं कालेणं तेणं समएणं समणे भगवं महावीरे वासाणं सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेइ" विशेष(बृहत्)कल्पभाष्यचूर्णावप्येवं-"एत्थ उ पणयं० गाहा-आसाढचाउम्मासिए पडिक्कंते पंचहि पंचहि दिवसेहि गएहि जत्थ जत्थ वासावासजोग्गं खेत्तं पडिपुन्नं तत्थ तत्थ पज्जोसवेयव्वं, जाव सवीसइराओ मासो, इय सत्तरी कहं भवइ ?, सवीसइरायं मासं हिंडियाणं लद्धं

खेत्तं, भद्दवयसुद्धपंचमीए पज्जोसवेत्ता कत्तियपुण्णिमाए पडिक्कमेत्ता विइयदिवसे णिग्गया, जइ भद्दवयअमावसाए पज्जोसवेंति. पंचसत्तरी भवइ, जइ भद्दवयबहुलदसमीए ठिया तओ असीति भवइ, एवं जाव आसाढपुण्णिमाए ठिया ताहे वीसुत्तरं सयं भवइ" तथा आषाढवृद्धौ श्रावणस्यैव विंशतिदिनेषु गतेषु पर्युषणा कर्त्तव्या भवति, तथाचोक्तं तत्रैव—"जइ अहिगमासो पडिओ तो वीसइरायं गिहिणायं कज्जति, किं कारणं ? इत्थ अहिगमासो चेव मासो गणिज्जति, स वीसाए समं सवीसतिराओ मासो भण्णति चेव त्ति" तथा "समणे भगवं महावीरेवासाणंसवीसइराए मासे विइक्कंते वासावासं पज्जोसवेइ"त्ति कल्पसिद्धान्तोक्त्या आषाढवृद्धावपि विंशतिरात्र-पर्युषणायां बोधितायामधिकमासस्य गणनात्सविंशतिरात्रमास एव पर्युषणाऽऽयाता, तथा च दिनगणनया श्रावणसितपञ्चम्येव पर्युषणायां मूर्द्धाभिषिक्ताऽभूत्, तदभिप्रायस्त्वयं—यद्भाद्रपद एव पर्युषणा युज्यते, तेन श्रावणवृद्धौ द्वितीये श्रावणे भद्रपक्षे कथं सा घटते ?, परं त्वया काणकरिणेव द्वितीयदिग्नाऽऽलोकि, यदधिकमासे श्रावण एव कथं पर्युषणा व्यधीयतेति, तेन नायं नियमो—यद्भाद्रपद एव पर्युषणा विधेयेति, लौकिकटिप्पनकानुसारेण श्रावणवृद्धावाषाढवृद्धाविव श्रावणे विधीयमाना सा युक्तेति सिद्धान्तपक्षस्य कक्षीकृतत्वात्, तथा 'सङ्घपट्टक' (अष्टाविंशतितमकाव्य) वृत्तौ श्रीजिनपतिसूरिकृतायां (५२४ पृष्ठे) "यच्छास्त्रबाधाकरं—सिद्धान्तविरोध्याधाकर्मौद्देशिकभोजनादि, यथा चौद्देशिकादीनां शास्त्रबाधितत्वं तथा प्रागेवोपपादितं, अथवा आषाढचतुर्मासकात्पञ्चाशत्तमदिनप्रतिपादितस्य पर्युषणापर्वणः श्रावणाद्याधिक्यवति वर्षेऽशीतितमेऽह्नि विधानं, यदुक्तं—'वृद्धौ लोकदिशा नभस्यनभसोः सत्यां श्रुतोक्तं दिनं, पञ्चाशं परिहृत्य हीं शुचिभवात्पश्चाच्चतुर्मासकात् । तत्राशीतितमे कथं विदधते ? मूढा महं वार्षिकं, कुग्राहाद्गिणय्य जैनवचसो बाधां मुनिव्यंसकाः ।१।" इति, तथाऽस्मद्गुरवोऽप्येवमेवोचुस्तथाहि—"पर्युषणायां मासस्य दिनानां विंशतेश्च भणात्. तथा पञ्चकदशकेन पञ्चाशद्दिनसम्भवो मूलसूत्रोक्तो,

न तावन्मासनामग्रहणमकारि, तेनात्र नाधिकमासाऽगणनाऽवकाशः, कार्त्तिकचतुर्मासकाऽधिकारे तु चन्द्रसंवत्सरापेक्षया पर्युषणातो दिनैस्सप्तत्यैव तस्य सम्भवः, अभिवर्धितवर्षे जैनाम्नायेन पौषापाढयोरेव वृद्धौ शतदिनैरेव तस्य सम्भवः, लौकिकटिप्पनकानुसारेण तु श्रावणभाद्रपदाश्वयुजवृद्धौ दिनशतसम्भवः स्यात्, दीपमालिकाऽनन्तरमेव चतुर्मासकसम्भवात्, शैलकज्ञाते कार्तिकपूर्णिमायां चतुर्मासकप्रतिक्रमणस्योक्तत्वात्" इति, तथा श्रीजिनपतिसूरिभिरप्युक्तं–"सावणे भद्दवए वा अहिगमासे चाउम्मासाओ पण्णासइमे दिणे पज्जोसवणा कायव्वा, न असीइमे" इति, तेन त्वमशीत्या दिनैः कुरुषे पर्युषणापर्व तत्सिद्धान्तोत्तीर्णं, सविंशतिरात्रमासस्य सूत्रोक्तस्योल्लङ्घितत्वादिति (न कल्पते पर्वोल्लंघनं उक्तञ्च–"सवीसइराए मासे विइक्कंते वासावासं पज्जोसवेमो, अंतरावि य से कप्पइ, नो से कप्पइ तं रयणिं उवायणावित्तए"त्ति, एवं चातुर्मासिकपर्वेऽपि नोक्तमिदं "अंतरावि य से कप्पइ, नो से कप्पइ तं रयणिं उवायणावित्तए"त्ति। तिथिक्षयावसिमन्नेव पक्षे वा पूर्वापरपक्षेऽधिकतिथिः त्वयाऽपि गण्यते एव, यथा तृतीयाक्षये त्रयोदशीवृद्धौ च पूर्वापराऽधिकतिथिः, एवं अधिकमासस्य अधिकपक्षौ अधिकदिनरात्रयश्च. पाक्षिकप्रतिक्रमणादौ मासपक्षादिमध्ये गण्यन्ते एव, यतः श्रीभगवद्गणितं न मिथ्या भवति उक्तञ्च–"गोयमा !० अभिवड्ढियसंवच्छरस्स छव्वीसाइं (२६ पक्खाइं) पव्वाइं" इति।)।३।४।

२३–तथा "भाद्रपदवृद्धौ प्रथमभाद्रपदे 'तेन' औष्ट्रिकेन 'सत्' पर्युषणापर्व उक्तं" एतदपि ते न सङ्गतिमङ्गति, दत्तोत्तरत्वात्, पञ्चाशता दिनैः पर्युषणाया उक्तत्वात्तदुल्लङ्घनमकुर्वद्भिरस्माभिः कथमागः मासं ?, तवैवेयं विशिष्य दोषावाप्तिः, न च भाद्रपदवृद्धौ द्वितीयभाद्रपदशुक्लचतुर्थ्यां पर्युषणा कर्त्तव्येत्युक्तमस्ति, किन्तु पञ्चकदशकगणनयेति, तेन प्रथमभाद्रपदशुक्लचतुर्थ्येवायाता, अमृतं पिब, न च "असङ्क्रान्तिमासोऽधिमासः स्फुटं स्यात्" इति भास्करसिद्धान्तोक्तत्वादसङ्क्रान्तिमासे कथं पर्युषणापर्व ? ति वाच्यं, तस्मिन् लग्नकार्यस्यैव

निषिद्धत्वात्, तद्धि दीक्षास्थापनाप्रतिष्ठालक्षणं, नान्यद्धर्मकर्म, यत उक्तं नारचन्द्रीयद्वितीयप्रकरणे—"रविक्षेत्रगते जीवे, जीवक्षेत्रगते रवौ। दीक्षां च स्थापनां चापि, प्रतिष्ठांश्च न कारयेत् ।५१।" वर्षशुद्धिः—"हरिशयनेऽधिकमासे, गुरुशुक्रास्ते न लग्नमन्वेष्यं। लग्नेशांशाधिपयोर्नीचास्तगते न च शुभं स्यात् । १ ।" इति, ततो नासङ्क्रान्तिमासे पर्युषणाकरणप्रतिषेधो घटत इति, किमेवमसद्दोषारोपणेनात्मानं दुःखागारे प्रवेशयसि ?, मुग्धस्य कस्यापि मधुद्धबुद्धेर्वचसा. 'औष्ट्रिकेन' इत्यपशब्दः, 'औष्ट्रिकेण' इति भवति (अत्र तथा किरणावल्यां भाद्रपदवृद्धौ द्वितीयभाद्रपदे तेन सागरोष्ट्रिकेण तत्पर्युषणापर्व मानितं तथा जैनसिद्धांतेन पौषाषाढवृद्धौ विंशतिदिनेषु गवेषु श्रावणे पर्युषणापर्वं, अतः लौकिकश्रावणभाद्रपदादिवृद्धौ दिनपञ्चाशतैव पर्युषणापर्व श्रीवीरभद्रबाहुपूर्वधरवृद्धैरुक्तं, तच्च अनेन खरीजेन धृष्टेन सागरोष्ट्रिकेण निन्हवेन सुश्रास्तिकताहीनेन मिथ्यादृष्टया अयथास्थानोत्सूत्ररूपं प्ररूपितं, श्रीवीरवचनं सत्यं एव वीरे सित्तर छोडि. अंदर पचासे कही. संवच्छरी उपर नहीं कल्पे जो, सर्व तीर्थंकर. दिन पक्ष मास वर्ष. अधिक गिनतीमां जल्पे जी ज्योतिषकरंड. सूर चंद पन्नत्तीए. चुर्णिए भाखे जिनभाण जी, श्रुतदेवी शुद्ध. बुद्धि देवे. श्रीजिनवचनप्रमाण जी ।१। )।३।५।१३।

अह वत्थुवितहभणणं, चउत्थमुस्सुत्तमेवमेअस्स । गब्भापहाररूवं, छट्ठं कल्लाणगं वीरे[१] ।१४।

२४—"अथ 'वस्तुवितथभणनं' वस्तुस्वरूपस्य विपरीतभाषणं चतुर्थमुत्सूत्रं, 'एवं' वक्ष्यमाणप्रकारेण 'एतस्य' चामुण्डिकस्य, तत्र वीरे गर्भापहाररूपं षष्ठं कल्याणकं"× इदमपि ते वचनरचनामात्रमेव, पूर्वं 'कल्पकिरणावल्यां' यदलेखि भवता लेखकेनेव तदस्मद्युक्ति-

× अस्मिन् विषये पत्र ७ मूलकल्पसूत्रे "तं सेयं खलु ममत्ति समणं भगवं महावीरं० तिसलाए खत्तिआणीए वासिट्ठसगुत्ताए कुच्छिसि गब्भत्ताए साहराविचए" इति इन्द्रेण तथा श्रीभद्रबाहुश्रुतकेवलिभिः प्रोक्तं, अतएव पत्र १९७ पञ्चाशके "पंच महा-

शक्तिनिपातमाप्तनिपनं शृणु, 'प्रतिपक्षनिरासे हि स्वपक्षसिद्धि'रिति भणनात् "पंचहत्थुत्तरेत्ति. व्याख्या-हस्तादुत्तरदिशि वर्त्तमानत्वाद्धस्त उत्तरो यासां वा हस्तोपलक्षिता वा उत्तरा हस्तोत्तरा-उत्तरफल्गुन्यः, बहुवचनं फल्गुनीशब्दस्य मायो बहुवचनान्तप्रयोगात्, यथा 'सिंहस्तु समया पूर्वाफाल्गुन्यः पाद उत्तराणाञ्चे'त्यादौ, मायो ग्रहणात्क्वचित् हारिभद्यादौ 'हस्तोत्तराया'मिति दर्शनेऽपि न व्यामोहः, यत्तु

परम, कल्लाणा-श्रेयांसि, भुवणऽच्छेरयभूया-भुवनाश्चर्यभूतानि, कल्लाणफला य-कल्याणफलानि च, जीवाणं-जीवानां, गब्भेत्ति गर्भाधाने (गर्भधारणे) कल्याणं श्रेयरूपं कथितं श्रीमदभयदेवसूरिभिः, किरणावल्यां ३४ पत्रे स्थानांगवृत्तौ च ५२३ पत्रे "गब्भहरणं-'गर्भस्य' उदरसत्वस्य 'हरणं' उदरान्तरसङ्क्रामणं गर्भहरणं" तथा कल्पदीपिकायां "गर्भस्य-श्रीवर्द्धमानरूपस्य हरणं-त्रिशलाकुक्षौ सङ्क्रामणं गर्भहरणं" तथा "कल्याणानां-शुभसमृद्धि विशेषाणां हेतुत्वादथवा कल्यं-नीरोगतामणन्ति-गमयन्तीति" (तैः कल्याणस्वप्नैः सह) त्रिशलाकुक्षौ श्रीवीरतीर्थंकररूपगर्भधारणं कल्याणरूपं "तत् श्रेय." इति सुबोधिकायां उक्तमस्ति पुनस्तुनः किरणावल्यां सुबोधिकायां च वस्तुवितथभणनं-वस्तुस्वरूपस्य विपरीतभाषणं तद्यथा-"अकल्याणकभूतस्य गर्भापहारस्य-नीचैर्गोत्रविपाकरूपस्य अतिनिंद्यस्य आश्चर्यरूपस्य गर्भापहारस्यापि कल्याणकत्वकथनमनुचित"मिति प्रोक्तं, तथा गुरुतत्वप्रदीपे "करोषि श्रीमहावीरे, कथं कल्याणकानि षट् ?। यत्त्वेकमऽकल्याणं, विप्रनीचकुलत्वतः ।?। " एतत् श्रीमहावीरे ब्राह्मणनीचकुलत्वतः अकल्याणं कथनं उच्चकुलेऽपि श्रीवीरगर्भापहारं-संक्रामणं-धारणं-नीचैर्गोत्रविपाकरूपं अतिनिन्द्यं कल्याणकत्वकथनमनुचितं अकल्याणकभूतं. एतद्वस्तुवितथभणनं-वस्तुस्वरूपस्य विपरीतभाषणं चतुर्थमुत्सूत्रं एवं उक्तप्रकारेण एतस्योच्छिष्टचाण्डालिकस्य, तत्र श्रीवीरे गर्भापहाररूपं षष्ठं अकल्याणकं सूत्रविरुद्धं नवीनं प्ररूपितमस्ति ।

कश्चित् 'बहुवचनं बहुकल्याणकापेक्षं' तदुपेक्षणीयमेव, प्रतिफल्गुनीमेकैकहस्तमपेक्ष्य हस्ता उत्तरा यासामिति विगृह्य बहुव्रीह्यापत्ते"रित्यादि, अत्रेयं खण्डनप्रक्रिया-पूर्वं ( यत् ) समासद्वयं श्रीजिनप्रभसूरिभिर्व्याख्यातं तत्प्रमाणमेव, तस्य घटमानत्वात्, "हस्तोपलक्षिता या उत्तरा हस्तोत्तरा-उत्तरफल्गुन्यः" अयं समासो न घटामटाट्यते, अनुक्तत्वायुक्त्यसङ्गतत्वाच्च, कथं ?, अत्र पूर्वसमासद्वयेऽप्युत्तरशब्द 'उत्तरफल्गुनी' वाचको नास्ति, किन्तु दिग्देशकालवाचकः, तत्र तु द्वयोः समासयोर्दिक्कालवाचकत्वं, तृतीये तु समासे 'उत्तर'शब्दो न दिक्कालवाचकः किन्तु त्वदभिप्रायेण 'उत्तरफल्गुनी' वाचकः, स च न घटते, अनेकार्थसङ्ग्रहे तदर्थानभिधानात्, यतः "उत्तरं प्रवरोदूर्ध्वयोः। (श्लोक ११२४) उदीच्यप्रतिवचसो, उत्तरस्तु विराटजे" इति, अभिधानकोषेऽपि "सा तूत्तरार्यमदेवा" इति पाठव्याख्यायां "'सा'फल्गुनी 'उत्तरा' उत्तरेति विशेषणविशिष्टा, उत्तरफल्गुन्यौ उत्तरफल्गुन्य इत्युक्त्यापि उत्तरशब्दः कालवाचकत्वेनोक्तः, पूर्वफल्गुन्युद्गमनापेक्षयोत्तरकाले उद्गमनादुत्तरफल्गुन्य"इति, तेन तव कल्पितोऽयं तृतीयोऽर्थः सर्वथाऽपि न घटते, तथा यत्त्रवतोक्तं "बहुवचनं फल्गुनीशब्दस्य प्रायो बहुवचनान्तप्रयोगा"दिति, इदमप्ययुक्तं, शब्दानुशासने पाणिविना द्वित्वे विकल्पेन बहुत्वाभिधानात्, प्रायो ग्रहणं शब्दानुशासनानभिज्ञत्वमेव तव द्योतयति, श्रीहेमाचार्येणापि "फल्गुनी योनिदेवते"ति पाठव्याख्यायां नाममालावृत्तावुक्तं-"पद्माचस्पति-पूर्वफल्गुनी योनिदेवता, शाब्दिकास्तु पूर्वफल्गुन्यौ पूर्वफल्गुन्य इति मन्यन्ते, 'फल्गुनी प्रोष्ठपदस्य भे' (२-२-१२३) इति द्वित्वस्य वा बहुत्वविधानात्, तथाच तत्सूत्रं अस्मदो द्वयोश्चेति द्वित्वमनुवर्त्तते, फल्गुनीप्रोष्ठपदानाञ्च नक्षत्रे द्वयोरनुकर्षणार्थः, फल्गुन्योर्द्वयोः प्रोष्ठपदयोश्च द्वयोर्नक्षत्रे बहुवचनमन्यतरस्यां भवति, कदा 'पूर्वे फल्गुन्यौ' कदा 'पूर्वाः फल्गुन्यः' कदा 'पूर्वे प्रोष्ठपदे' कदा 'पूर्वाः प्रोष्ठपदा" इति, "यत्तु कश्चिद्बहुवचनं बहुकल्याणके"त्यादि तदप्यनवबोधाविर्भावकं, "बहुवचनं बहुकल्याणकापेक्षं" इदमेव घटते, द्वित्वे बहुत्वमस्तीति तदुक्त्य-

वच्छेदाय तदुव्यवच्छेदकस्य पञ्चेति पदस्य पञ्चाननवज्जागरूकत्वात्, "पञ्चसु कल्याणकेषु हस्तादुत्तरस्यां दिशि वर्त्तमानत्वात् हस्तोत्तरा हस्त उत्तरो यासां वा ता हस्तोत्तरा-उत्तरफल्गुन्यः" इत्युक्तं कल्पावचूर्णौ कुलमण्डनसूरिभिः, तथा "प्रतिफल्गुनीमेकैकं हस्तमपेक्ष्य हस्ता उत्तरा यासामिति विगृह्य बहुव्रीह्यापत्ते"रिति भवदीयपाठे "प्रतिफल्गुनी"मित्यपपाठः, भवति च "प्रतिफल्गुनी"ति, अव्ययीभावादतिरिवदिति, अर्थापेक्षया त्वयं दोषः—"एकैकं हस्तमपेक्ष्य हस्ता उत्तरा यासा"मित्युक्तं तत्रान्यपदार्थबहुत्वे किं समस्यमानपदानामपि बहुत्वं न्याय्यं ? येन "हस्ता उत्तरा यासा"मित्युच्येत, एवञ्च "चित्रा गौर्येषा"मिति समासे एकगोस्वामित्वे अन्यपदार्थापेक्षया "चित्रा गाव" इति प्रसक्तं स्यात्, अन्यच्च "बहुव्रीह्यापत्ते"रित्यसङ्गतमेवेष्टत्वात्तस्य, "हस्त उत्तरो यासा"मिति बहुव्रीहेरेवाश्रयणात्, न चान्यपदप्रधानविग्रहमन्तरेणोत्तरफल्गुन्य उपलभ्यन्ते, तथा अवधिमतो बहुत्वे किमवधेरपि बहुत्वेन भाव्यं ?, हस्तादुत्तरस्यां दिशि उत्तरफल्गुनीनां विद्यमानत्वेन किं हस्तस्यापि बहुत्वं घटमानं ?, ध्रुवाद्गौव्येण तत्तद्दिगाद्युपलक्षितमन्दिरादिवस्तुवृन्दं वर्त्तते इति किं मन्दिरादिवस्तुबाहुल्ये ध्रुवस्यापि बाहुल्यं केनचित्परिकल्प्येत ?, ततो नैवंविधो विग्रहाश्लिष्टो विग्रहकारी बहुव्रीहिरुदयमासादयेदिति कुतस्तदापत्तिविपत्तिरिति, तथा चतुर्णां च्यवनादीनां कल्याणकत्वं गर्भापहारस्य नेति कुत उपलब्धिः ?, पञ्चहस्तोत्तरो भगवानभूदिति कथनात् भवनं तु सर्वत्र समानमेव, यदि चत्वारि कल्याणकानि तदा भवतोऽनिष्टोऽप्ययं गर्भापहारः कल्याणकत्वेन समापतित एव, सन्नियोगशिष्टानामन्यतरा(भावे)पाये उभयोरप्यभाव एवेति महाभाष्योक्तेः, यदि गर्भापहारस्याकल्याणकत्वं ? तदा तन्मिश्रितत्वात्तदन्येषां चतुर्णामप्येषामकल्याणकत्वं तव पक्षे बलादायातं, अपि च यद्याश्चर्यभूतत्वेन न मन्यसे गर्भापहारे कल्याणकत्वं ? तर्हि मल्लिस्वामिनोऽपि स्त्रीत्वे तीर्थंकृत्त्वं न स्वीकरणीयमाशाम्बरवत्, तत्राप्याश्चर्यभूतत्वस्य समानत्वात्, तदुच्छेदे च तव गर्भश्राद्धेनैव गलिता तमधिकृत्य

पञ्चकल्याणकव्यवस्था, तथा भवद्गुरुणा कुलमण्डनाचार्येणापि समं भवतो विरोधो दुर्निरोधस्समापन्नः, तेन हि पञ्चानामपि कल्याणकत्वं स्वीचक्रे, त्वया च प्रतिषिध्यते, अहो !! गुरुशिष्ययोर्वैयं पारम्पर्यं, अथ गर्भापहारे च्यवनादिवस्तुचतुष्कवत् कल्याणकत्वव्यवस्थापिकामनेकशास्त्रसम्मतिं दर्शयामः, पत्तनज्ञानकोशे ताडपत्रपुस्तिकायां चन्द्रकुले श्रीशीलभद्रसूरितच्छिष्यधर्मघोषसूरितच्छिष्ययशोभद्रसूरितच्छिष्यदेवसेनगणितच्छिष्यपृथ्वीचन्द्रसूरिकृते पर्युषणाकल्पटिप्पनके "हस्त उत्तरो यासां ताः, बहुवचनं बहुकल्याणकापेक्षं, योगश्चन्द्रेण सह सम्बन्धः" १। तथा श्रीविनयेन्दुसूरिणा श्रीपर्युषणाकल्पाध्ययननिरुक्ते श्रीविक्रमाच्चगुणेन्दु(१३२५)वर्षनिर्मिते–"तेणं कालेणं ति-तस्मिन्काले, यः पूर्वतीर्थकरैः श्रीवीरस्य च्यवनादिहेतुर्ज्ञातः कथितश्च, यस्मिन्समये तीर्थकरश्च्यवति स एव समय उच्यते, समयः कालनिर्द्धारणार्थो, यतः कालो वर्णोऽपि" तथा "हस्त उत्तरो यासां वा हस्तोत्तरा–उत्तरफल्गुन्यो. बहुवचनं बहुकल्याणकापेक्षं, तस्यां हि विभोश्च्यवनं–गर्भाद्गर्भसङ्क्रान्तिः–जन्म-व्रतं-केवलश्चाभवत्, निर्वृतिस्तु स्वातौ" २। तथा दशाश्रुतस्कन्धाष्टमाध्ययनचूर्णौ–"तेणं कालेणं ति-जो भगवता उसभसामिणा सेसतित्थगरेहि य भगवतो वद्धमाणसामिणो चवणादीणं छण्हं वत्थूणं कालो णातो दिट्ठो वागरिओ य तेणं कालेणं, तेणं समएणं ति–कालान्तर्गतः समयः समयादिश्च कालः, सामण्णकालतो एस विसेसकालो समतो, हत्थस्स उत्तरातो–हत्थोत्तरातो गणणं पडुच्च हत्थोत्तरो जासिं ताओ हत्थोत्तराओ–उत्तरफग्गुणीओ, छट्ठी पच्चखेणं ति"३। यच्च वर्द्धमानस्वामिनः पञ्चाशकवृत्तावस्मद्गुरुभिः श्रीअभयदेवसूरिभिः पञ्चैव कल्याणकान्युक्तानि, तत्र हि–"सेसाणवि एवं चिय, नियनियतित्थेसु विण्णेया ।३६। व्याख्या–शेषाणामपि-न वर्द्धमानस्यैव, ऋषभादीनामपि वर्त्तमानावसर्पिणीभरतक्षेत्रापेक्षया, एवमेव इह तीर्थे वर्द्धमानस्येव, निजनिजतीर्थेषु स्वकीयस्वकीयप्रवचनावसरेषु, विज्ञेयानि–ज्ञातव्यावसरेषु ज्ञेयानि–ज्ञातव्यानि. मुख्यवृत्त्या विधेयतयेति, इह च यान्येव गर्भादिदिनानि जंबू-

द्वीपभारतानामृषभादिजिनानां तान्येव सर्वभारतानां सर्वैरवतानां च, यान्येव च एतेषामस्यामवसर्पिण्यां तान्येव च व्यत्ययेनोत्सर्पिण्यामपीति गाथार्थः" (मुद्रिते पत्र १६९) "पंच महाकल्लाणा, सव्वेसिं जिणाण हवंति नियमेण । भुवणऽच्छेरयभूया, कल्लाणफला य जीवाणं ।३०।" इति, तन्नियमविधायकं वचः, पञ्च भवन्त्येव, न न्यूनानीति, न्यूनत्वस्याघटमानत्वात्, न ह्यच्युतस्य जन्म, न ह्यजातस्य दीक्षा, न च तीर्थकृतो दीक्षामप्रतिपन्नस्य केवलं, न च तदभावे मुक्तिरित्यतो न्यूनत्वाभावे नियमः, आधिक्ये तु नियमो नास्ति, साक्षादवलोक्यमानत्वाच्चस्य, यदत्र वीरस्य षट्सु कल्याणके विशेषरूपे विद्यमानेऽपि पञ्चकल्याणकप्रतिपादनं तदतिदेशार्थं, उभयसाधारणपदापेक्षत्वादतिदेशस्येति, यथा श्रीपञ्चमाङ्गे–"जति णं भंते ! सक्के देविंदे देवराया जाव महिड्डीए जाव एवइयं च णं पभू विकुव्वित्तए, ईसाणेणं भंते ! देविंदे देवराया के महिड्डीए ?, एवं तहेवत्ति" अत्र 'एवं तहेवत्ति'अनेन यद्यपि शक्रसमानवक्तव्यमीशानेन्द्रप्रकरणं सूचितं तथापि विशेषोऽस्ति, सचायं–"से णं अट्ठावीसाए विमाणावाससयसहस्साणं असीइए सामाणियसाहस्सीणं जाव चउण्हं असीईणं आयरक्खदेवसाहस्सीणं"ति, यथा वा स्थानाङ्गे–"पंच य हत्थुत्तरो वीरो" इत्युक्त्वा किं स्वातौ वीरनिर्वाणकल्याणकाभावः प्रतिपादितः ?, किन्त्वेकैकनक्षत्रोत्पन्नपञ्चपञ्चकल्याणकप्रतिपादनाधिकारात्सदपि षष्ठं वीरनिर्वृतिकल्याणकं नोक्तं, तद्वदत्रापि न दोषः४। तथा सन्देहविषौषध्यां श्रीजिनप्रभसूरिकृतायां–"पञ्चसु च्यवनगर्भापहारजन्मदीक्षाज्ञानकल्याणकेषु हस्तोत्तरा यस्य स"५। तथा तपाकुलमण्डनसूरिकृतकल्पावचूर्णौ–"पञ्चसु कल्याणकेषु हस्तादुत्तरस्यां दिशि वर्तमानत्वात् हस्तोत्तरा हस्त उत्तरो यासां वा ता हस्तोत्तरा–उत्तरफल्गुन्यः"६। तथा श्रीस्थानाङ्गे पञ्चमस्थाने (३०७ पत्रे) प्रथमोद्देशके–"पउमप्पभस्स चित्ता, मूलो उण होइ पुप्फदंतस्स । पुव्वाइ आसाढा, सीतलस्सुत्तर विमलस्स भद्दवया ।१। रेवति तर अणंतजिणो, पूसो धम्मस्स संतिणो भरणी । कुंथुस्स कत्तिताओ, अरस्स तह रेवतीतो य ।२। मुणिसुव्वयस्स

सवणो, अस्सिणि नमिणो य नेमिणो चित्ता। पासस्स विसाहाओ, पंच य हत्थुत्तरो वीरो ।३। समणे भगवं महावीरे पंच हत्थुत्तरे होत्था, तंजहा–हत्थुत्तराहिं चुए, चइत्ता गब्भं वक्कंते, हत्थुत्तराहिं गब्भाओ गब्भं साहरिए, हत्थुत्तराहिं जाए, हत्थुत्तराहिं मुंडे भवित्ता जाव पव्वइए, हत्थुत्तराहिं अणंते अणुत्तरे जाव केवलवरनाणदंसणे समुप्पन्ने" अत्र गर्भापहारस्यान्यचतुष्कसमतोद्देशेन कल्याणकत्वं स्वत एव निर्व्यूढं ७। अत्र केचित्प्रतिपादयन्ति-प्रथमतीर्थंकरस्योत्तराषाढासु जम्बूद्वीपप्रज्ञप्त्यां राज्याभिषेक उक्तः सोऽपि कल्याणकत्वेनास्तु, मैवं, तस्य मासतिथ्योरनुक्तत्वात्कस्मिन्मासे कस्मिंस्तिथावाराधनं कुर्मः ?, गर्भापहारे च आवश्यकनिर्युक्तौ मासतिथिनक्षत्राणामुक्तत्वात्, स्थानाङ्गे किमिति पञ्चमस्थानके पद्मप्रभादिवदेकनक्षत्रेऽस्यापि(राज्याभिषेकस्यापि)प्रतिपादनं नाकारि ?,समानयोगक्षेमत्वात्, तथाऽन्येषामपि तीर्थकृतां राज्याभिषेक उक्तोऽस्ति परं न कल्याणकत्वेन न्यगादि, जम्बूद्वीपप्रज्ञप्त्यामयं पाठः–"उसभेणं अरहा कोसलिए पंच उत्तरासाढे अभीइछट्ठे होत्था, तंजहा–उत्तरासाढाहिं चुए, चुइत्ता गब्भं वक्कंते, उत्तरासाढाहिं जाए, उत्तरासाढाहिं रायाभिसेयं पत्तो, उत्तरासाढाहिं मुंडे भवित्ता आगाराओ अणगारियं पव्वइए, उत्तरासाढाहिं अणंते जाव (केवलवरनाणदंसणे) समुप्पण्णे, अभीइणा परिनिव्वुए"। तथा आगमिक-श्रीजयतिलकसूरिविरचिते 'सम्यक्त्वसम्भव'नाम्नि महाकाव्ये–सुलसाचरिते सम्यक्त्वपरीक्षणनाम्नि षष्ठे सर्गे–"सिद्धार्थराजाङ्गजदेवराज !, कल्याणकैः षड्भिरिति स्तुतस्त्वं। तथा विघ्नान्तरवैरिषट्कं, यथा जयाम्याशु तव प्रसादात् ।५०। इति स्तुत्वा जिनाधीशं, त्रिःप्रणम्याम्बडो मुनिः। विस्मितास्यः सभासीनो-ऽश्रौषीत्तद्धर्मदेशनां ।५१।" इति ८। तथा श्रीजिनदत्तसूरिभिरप्युक्तं–"गब्भापहारकल्लाणगंपि नहु होइ वीरस्स" इत्युत्सूत्रं, तथा 'सङ्घपट्टक' (३३ मूलकाव्यस्य) बृहद्वृत्तौ (मुद्रिते ५९६ पृष्ठे चित्रकूटीयमहावीरचैत्यप्रशस्तिव्याख्याने)–"क्षुद्राणां लिङ्गिनामाचीर्णानि, सिद्धान्तोक्तमपि श्रीमहावीरस्य षष्ठं गर्भापहारकल्याणकं लज्जनीयत्वान्न कर्तव्यमित्यादिका आचरणाः"

इति, तदेवं सिद्धान्तपक्षमुररीकृत्यापि तन्मतिक्षेपायोद्यच्छन् सतां कथं नोपहास्यतां यासि ? (यत एवं वीरगर्भः कल्याणस्तवयोग्यः
वन्दे वीरं गर्भरूपं, सदा कल्याणरूपकं । मन्यन्ते भाग्यवन्तः कि-मऽकल्याणकरूपकं ? ।१। यत उक्तं गुरुतत्त्वप्रदीपे "करोषि श्रीमहावीरे,
कथं कल्याणकानि षट् ? । यत्रैकमऽकल्याणं, विमनीचकुलत्वतः ।१।" कल्पकिरणावल्यां "अकल्याणकभूतस्य गर्भापहारस्य" कल्प-
सुबोधिकायां "नीचैर्गोत्रविपाकरूपस्य अतिनिन्द्यस्य आश्चर्यरूपस्य गर्भापहारस्यापि कल्याणकत्वकथनमनुचितं" । विमनीचकुलाश्चर्य-
गर्भापहारकारणैः । गर्भाधानमकल्याणं, गर्भकल्याणकं कथं ? ।२। आश्चर्यमपि कल्याणं, श्रीमल्लिवीरयोर्मतं । नीचनिंद्याऽशुभैर्विद्यैः
रऽकल्याणं कथं भवेत् ? ।३। कल्याणं च्यवनं प्रोक्तं, गर्भकल्याणकं तथा । अवतरणकल्याण- मकल्याणं कथं भवेत् ? ।४। यत उक्तं
"गब्भे जम्मे य तहा, णिक्खमणे चेव णाणणिव्वाणे । भुवणगुरूण जिणाणं, कल्लाणा होंति णायव्वा ।३१।" इति पंचाशके । "अव-
यरणजम्मणिक्खमण, णाणणिव्वाणपंचकल्लाणे । तित्थयराणं नियमा, करंति ऽसेसेसु खित्तेसु ।१।" इति श्रीजिनभद्रीयबृहत्संग्रहण्यां ।
नीचकुलेऽवतीर्णो हि, वीरः कल्याणको मतः । उच्चकुलाऽऽगतो वीरः, किमऽकल्याणको मतः ? ।५।
विप्रकुलेऽवतीर्णो हि, किमऽकल्याणको मतः ? ।६। देवानन्दोदरे गर्भो, यथा कल्याणरूपक-स्तथैव त्रिशलोदरे, गर्भः कल्याणको
मतः ।७। हरणं चापहारस्तत्, त्रिशलोदरधारणं । गर्भधारणकल्याणं, तत्स्ऽकल्याणकं कथं ? ।८। तावदपहृतो गर्भः, त्रिशलाकुक्षिसंहृतः । क्षत्रियकुलागतो, गर्भः कल्याणको
अतो गर्भापहारो हि, श्रेयः कल्याणसूचकः ।९। गर्भस्योदरसत्त्वस्य, इति स्थानांगवृत्तितः । हरणमुदरांतरे, सङ्क्रामणं तु श्रेयसे ।१०।
उक्तं इन्द्रेण मूलकल्पसूत्रे "तं सेयं खलु ममवि समणं भगवं महावीरं० तिसलाए खत्तियाणीए वासिट्ठसगुत्ताए कुच्छिसि गब्भत्ताए साहरा-
वित्तए" इति । त्रिशलोदरगो गर्भः, पंचकल्याणमध्यतः । प्रोक्तः श्रीभद्रबाहुभिः, स्वग्रन्थैः कल्याणको हि सः ।११। प्रोक्तः पंचाशके गर्भो, यथा

त्रिशलोदरगो हि सः ।१२। सुष्ठु प्रोक्तं हि कल्याणं, जिनवल्लभसूरिभिः । दुष्टमुक्तमकल्याणं,
कल्याणरूपकः । तथा पुनरपि प्रोक्तः, त्रिशलोदरगो हि सः ।१२। सुष्ठु प्रोक्तं हि कल्याणं, जिनवल्लभसूरिभिः । दुष्टमुक्तमकल्याणं,
त्वत्पूज्यद्वेष्यता हि सा ।१३। प्रोक्तः पंचाशके गर्भः, कल्याणफलसूचकः ! कल्पसूत्रेऽपि स स्वप्नैः, कल्याणफलसूचकः ।१४। सूत्रार्थमपरं
नास्ति, येनाऽकल्याणकं भवेत् । धृष्टाः ब्रुवंति मूढाश्च, कर्मबंधनहेतवे ।१५। देवानंदोदराद्गर्भो, त्रिशलाकुक्षि( धारणात् )मोचनात् ।
ज्ञेयो गर्भो यथा पूर्वं, तथा कल्याणको हि सः ।१६। हरणं त्रिशलाकुक्षौ, विभोः न मन्यते तदा । कल्याणानि तु पञ्चैव, अन्यथा तु
षडेव हि ।१७। हरणं त्रिशलाकुक्षौ, मन्यंते श्वेतवाससः । दिगंबरा न मन्यंते, देवानन्दोदराद्विभोः ।१८। मातृकुक्ष्यागतो जिनः, स्वप्नैः
कल्याणसूचकः । त्रिशलाकुक्षिगो गर्भो, नास्त्यकल्याणको हि सः ।१९। "पंच महाकल्लाणा (श्रेयांसि), सव्वेसिं जिणाण हवंति णियमेण ।
भुवणऽच्छेरयभूया, कल्लाणफला य जीवाणं ।३०।" वचः (इदं) पञ्चाशके पंच, महाकल्याण(श्रेय)दर्शकं । त्रिशलाकुक्षिगं गर्भं, नाऽ-
कल्याणमलापकं ।२०। उक्तगाथाद्विके गर्भो, महाकल्याणनिश्चितो । कथं भवत्यकल्याणः, त्रिशलोदरगो हि सः ? ।२१। हरणमपहारश्चे-
त्त्वयाऽकल्याणको मतः । धारणं मातृकुक्षौ किं, त्वयाऽकल्याणकं मतं ? ।२२। भगवद्वीरगर्भश्चे-त्त्वयाऽकल्याणको मतः । श्रीवीरो गर्भरूपश्च,
किमऽकल्याणको मतः ? ।२३। उक्तं दिनमनुक्तं तत्, कल्याणकमशाश्वतं । तेन किं त्रिशलाकुक्षौ, वीरोऽकल्याणको भवेत् ? ।२४। पंच-
शाश्वतकल्याणाः, एकेनाशाश्वतेन षट् । कल्याणकमशाश्वतं, केनाकल्याणकं भवेत् ? ।२५। पंचकल्याणतः षष्ठ-मऽकल्याणं कथं भवेत् ? ।
पंचमहाव्रतात् षष्ठ-मऽव्रतमऽपि किं भवेत् ।२६। पंचमहाव्रतात्षष्ठं, रात्रावभोजनं व्रतं । पंचकल्याणतः षष्ठं, कल्याणं गर्भधारणं ।२७।
जिनराज्याऽभिषेकस्तु, नास्ति कल्याणपंचके । गर्भधारणकल्याण-मऽस्ति कल्याणपंचके ।२८। सर्वगुणीजिनेन्द्रेऽस्मिन्, वीरेऽकल्याण-
भाषणं । अकल्याणं तु तत्तस्य, प्रभोः अवर्णवादतः ।२९। कल्याणं शुभसमृद्धि-विशेषाणां हि कारणात् । नीरोगत्वमणन्तीति, कल्याणं

श्रेयसं मतं ।३०। द्विमातृपितरः ऋद्धिं, भुक्त्वाऽगुः स्वर्गमोक्षयोः । श्रीवीरस्य हि कल्याण-मऽकल्याणं कथं भुवे ? ।३१। श्रेय उक्तं हि, श्रेयः कल्याणकं मतं । मोक्षे वीरवियोगेऽपि. मोक्षकल्याणकं मतं ।३२। ) ।४।१।१४।

इह लोगस्स निमित्तं, जिणवरभोगाइमाणणं अत्थि । लोउत्तरमिच्छत्तं, न होइ तस्सेवमुवएसो[२] ।१५।

२८—"इहलोकस्य निमित्तं-इहलोकार्थं जिनवरभोगादिमाननमस्ति, परं लोकोत्तरमिथ्यात्वं न भवति, एवमेतस्योपदेशः" एतस्य विच- रालतां दर्शयामोऽवधानं विधाय श्रवोगोचरीचरीकुरु, पूर्वं लोकोत्तरमिथ्यात्वमेव न बुद्धं त्वया, तथाहि-लोकोत्तरदेवगतमिथ्यात्वमाह "लोउत्तरो वि वज्जइ परतित्थियसंगहिय(जिण)बिंबे, जत्थ जिणमंदिरम्मिवि निसिप्पवेसोऽबलाण समणाणं. वासो य, नंदिबलिहाण- न्हाणणट्टं पइट्ठा य. तंबोलाई आसायणा उ जलकीलदेवयं दोलं. लोइयदेवगिहेसु व बहुइ असमंजसं एवं. तत्थवि सम्मदिट्ठीण सायरं सम्मरक्खणपराण कप्पइ सवसाण नो गमणं" इति मिथ्यात्वस्थानकुलके समत्ययश्रीस्तम्भनकपार्श्वादेः पुरतो माननादेर्मिथ्यात्वस्यरूपता न प्ररूपिता, तपारत्नशेखरसूरिविरचित(श्राद्ध)प्रतिक्रमणवृत्तौ ( अर्थदीपिकायां ३५४तमे पत्रे ) पुनः—"लोकोत्तरदेवगतं तु परतीर्थिक- संग्रहीतजिनबिम्बार्चनादिसमत्ययश्रीशान्तिनाथपार्श्वनाथादिप्रतिमाणामिहलोकार्थं यात्रोपयाचितमाननादि च" इत्युक्तं तदप्रमाणमेव, तत्र तद्बीजं गवेष्यं, भवत्सदृक्षा भवत्पक्षीया यदीदं कुर्वन्ति हठमठास्तदा किं सर्वैरपि प्रमाणपथमानेतव्यं ?, यच्च तिलकाचार्येणागविकेन साधुप्रतिक्रमणवृत्तौ प्रत्यपादि—"मिथ्यादर्शनं-मिथ्यात्वं, शरीरादिकारणेन स्तम्भनकादिनमस्करणक्षणकरण"मिति तदप्यसुन्दरं. तथापि निन्हवत्वेन समानत्वात्तस्य, न चाप्रामाणिकस्योपदेष्टुर्वचः प्रमाणं भवति, वाचां प्रामाण्यस्य वक्त्रधीनत्वात्, अन्यथा सर्वमपि वाक्यं प्रमाणं स्यात्, तथाऽऽपन्निस्तरणार्थं जिनानां पुरः श्राविकाया उपयाचितककरणस्य श्रीवसुदेवहिण्डौ (मुद्रिते २९१ पत्रे) प्रस्तुतोपदर्शितस्याध्यक्ष

लोकोत्तरमिथ्यात्वं, तथाहि–"ततो राया वसुमित्तसुसेणामच्चेहिं समं संपहारेऊण चारुचंदकुमारं लवइ–गच्छ तुमं तावसासमं, तत्थ जण्णस्स परिरक्खणं कुणह, ततो सो कुमारो विउलवाहणबलसमग्गो बहुजणेण समं संपत्तो। तम्मि य जण्णे वट्टमाणे चित्तसेणा कलिंगसेणा अणंगसेणा कामपडागा य संघसएण पेच्छाओ दलयंति, दुम्मुहो य दासो कामपडागाए वारगं जाणित्ता सूईनट्टं आणवेइ, ताओ य सूईओ विसेण संजोइत्ता कामपडागाए नच्चणट्ठाणे ठवेइ, तं च कामपडाया जाणिऊण उवाइयं करेइ–जइ नित्थरामि पेच्छं तो जिणवराण अट्ठाहियं महामहिमं करिस्सामि, चउत्थभत्तेण य तं नित्थरइ पेच्छं, ता य सूईओ विससंजुत्ताओ देवयाए अवहियाओ, अह चारुचंदो कुमारो कामपडागाए नट्टम्मि परितुट्ठो"इत्यादि "पंच अणुव्वयाणि पासम्मि तस्स सामिदत्तस्स सावयस्स कामपडाया अहं (च) सोऊण जायाओ सावियाओ"एतदन्त, इति श्रीवसुदेवहिण्डावष्टादशलम्भे (२९७ पृष्ठे), यदीदं लोकोत्तरमिथ्यात्वमभविष्यत्तदा सा श्राविका कथमिदं मानमकरिष्यत्, अपरं व्यवहारभाष्यवृत्तावपि (षष्ठोद्देशके २१ पत्रे) सूरिरक्षणाधिकारे–"कस्मादेवं रक्षा क्रियते इति चेत्? कुलस्य तदायत्तत्वात्, उक्तं च–'जम्मि कुलं आयत्तं, तं पुरिसं आयरेण रक्खाहि'इत्यादि, कथं पुनः स रक्षितव्य? इत्यत आह–"जह राया तोसलिओ, मणिपडिमा रक्खए पयत्तेण। तह होइ रक्खियव्वो, सिरिघरसरिसो उ आयरितो ।११४। व्याख्या–यथा राजा तोसलिको मणिप्रतिमे च प्रयत्नेन रक्षति तथा भवत्याचार्यो रक्षितव्यो, यतः श्रीगृहसदृश एष आचार्यः, अथ के ते प्रतिमे? इत्यत आह–पडिमुप्पत्ती वणिए, उदही उप्पातो उवायणं भीतो। रयणदुगे जिणपडिमा, करेमि जइ उत्तरेऽविग्घं ।११५। उप्पाउवसमउत्तर–णमविग्घं एक्क पडिमकरणं वा। देवयउंदेण तओ, जाया तिएवि पडिमा तो।११६। व्याख्या–प्रतिमयोरुत्पत्तिर्वक्तव्या, सा चैवं–एकस्य वणिजः समुद्रं प्रवहणेनावगाढस्योत्पात उपस्थितः, ततः स वणिक् भीतः सन् औपयाचितकं करोति, यथा–यदेत-

दीत्पातिकमुपशाम्यति अविघ्नेनोत्तरामि च ततोऽनयोर्मणिरत्नयोर्द्वे मणिमय्यौ जिनप्रतिमे कारयिष्यामि, एवमौपयाचितके कृते देवता-ऽनुभावेनौत्पातिकमुपशान्तमविघ्नं समुद्रोत्तरणमभूत्, सचोत्तीर्णः सन् लोभेन एकस्मिन्मणिरत्ने एकां जिनप्रतिमां कारयति, ततो देवतया द्वितीयेऽपि मणिरत्ने द्वितीया जिनप्रतिमा कारिता, तथा चाह-देवताछन्देन ततो जाता द्वितीयेऽपि मणिरत्ने प्रतिमा। तो भत्तीए वणिजो, सुस्सूसइ ता परेण जत्तेण। ता दीवएण पडिमा, दीसंतिहराउ रयणाई ।११७। व्याख्या--ततः प्रतिमाद्वयकारापणानन्तरं ते प्रतिमे वणिग् भक्त्या परेण यत्नेन शुश्रूषते, ततस्तयोश्च प्रतिमयोरिदं प्रातिहार्य-ते प्रतिमे यावद्दीपकः पार्श्वे ध्रियते तावद्दीपकेन हेतुना प्रतिमे दृश्येते, 'इतरथा' दीपकाभावे सप्रकाशेऽपि प्रकाशे मणिरत्ने दृश्येते। सोऊण पाडिहेरं, राया घेत्तूण सिरिहरे छुहति। मंगलभत्तीइ तओ, पूएति परेण जत्तेण ।११८। " इत्यादिपाठेनाप्यौपयाचितककरणं प्रत्यपादि श्राद्धस्येति, अन्यथोपपत्तिकामपि तत्रारोचमानामपि कर्णपथातिथिं कुर्महे, तथाहि-इह लोकार्थं यदि तीर्थकृतः समभावस्य पुरतो भोगादिमाननं विहितं तदा तस्य तावदेव फलं, तदधिष्ठातारश्च सुराः पूरयन्ति तत्कामितं, तथा च मिथ्यात्वं कथं भवति ?, अदेवे देवबुद्धिर्हि मिथ्यात्वं, अत्र तु अर्हत्यर्हत्त्वस्य एव तस्यास्ते, विपरीतप्रत्ययाभावात्सम्यक्त्वमेव, न मिथ्यात्वं, यदि पुनर्मानितवस्त्वप्राप्तौ जिनेष्ववमाननमपि स्यात्ततो मिथ्यात्वहेतु-त्वान्मिथ्यात्वं ? तर्हि क्षेत्रपालादिभ्योऽप्युपयाचिताद्यभ्युपगमे तदिष्टाप्राप्तौ तत्राकिञ्चित्करत्वावबोधे तन्माननमपि सम्यक्त्वं प्रसज्येत्, अदेवेष्वदेवत्वबुद्धेर्निमित्तत्वात्, समानयोगक्षेमत्वान्नैकोऽपि पर्यनुयोक्तव्यः, तथा स्वदेवान् परिहृत्य परदेवानां पुरतो माननादिर्यदि विदधीत तदा मिथ्यात्वमनेन प्रथितं भवति, लोका मिथ्यात्विन इति प्रतिपद्यन्ते यदेषां देवानां मध्ये किमपि सातिशयत्वं नास्ति अतएवामी अस्मद्देवसेवाहेवाकिनो बभूवुरिति स्वीयदेवेषु तेषां विशेषतो माननं स्यात्, 'स्वगृहं ज्वालयता परगृहज्वालनमपि तेन कृतं

उत्सूत्र
खण्डनम्

वक्रेणे'ति न्यायः स्मारितः, स्वयं मिथ्यात्वं गच्छता परेऽपि तद्दार्ढ्यमापादिताः स्युरिति, स्वीयदेवमानने तु यदि [illegible] [illegible] तदा तस्यैव मिथ्यात्वं, न परे श्रावका अपि परदेवमाननान्मिथ्यात्वं लभेरन्, बहुलाभोपस्थितावल्पव्ययस्यापीष्टत्वाद्, वणिक्व्यवहारेऽपि तथोपलब्धे, राजकरं दत्त्वाऽपि ते व्यापारं सूत्रयन्ति, यदेव मिथ्यात्वं तदेवोत्सूत्रं, इदं हि लोकोत्तरमिथ्यात्वं न भवति तेन नोत्सूत्रं, यदि पुनः स्वदेवे माननादभ्यधिकं शक्रस्तवादिविशेषार्चां विरचयति तदा तेन सम्यक्त्वमप्युज्ज्वालितं स्यात्, भस्मनाऽऽदर्शवत् ।४।२।१५।

एवं चामुंडाई–आराहणमत्थि नत्थि किर दोसो। बलिवक्कुलाइविहिणा, पंचनईसाहणं च पुणो [२] ।१६।

२६–" एवं-अमुना प्रकारेण, चामुण्डाद्याराधनमस्ति, आदिशब्दात् क्षेत्रपालाद्यपि, नास्ति किल दोषः, तथा बलिवक्कुलादिविधिना पञ्च-नदीसाधनं, च पुनः" इदमपि ते अनुपासितगुरोर्वचो विद्वज्जनं न रञ्जयति, यत्त्वया 'चामुण्डाद्याराधनमस्ती'त्युक्तं तच्चामुण्डाराधनं केन विदधे ?, श्रूयते चैवं-श्रीजिनवल्लभसूरिभिश्चित्रकूटे चामुण्डादेवकुले तस्थिवद्भिर्दृष्टतच्चारित्रिनिरतातिशयगुणावर्जिता चामुण्डा प्रतिबोधिता सम्यक्त्वं प्रापिता, कथं पुनस्ते शुद्धचारित्रिणो मिथ्यासुर्याश्चामुण्डाया आराधनं विदध्युः ?, प्रतिबोधस्तु मिथ्यात्विनां तीर्थकृद्भिरपि विहितो वर्त्तते, नात्र दोषकलिकाऽपि समुन्मीलति, चक्षुरौषधं कर्णयोः क्षिपन् किं शिल्पिकौशलं लप्स्यसे ?, विदधे चामुण्डाप्रति-बोधस्तत्त्यक्त्वा परोक्षतिमसहमानेन तदाराधनं विदध इत्युक्तं भवता, आदि शब्दात् क्षेत्रपालाद्याराधनं नास्मत्पूर्वजैर्व्यधायि, श्रूयन्ते दृश्यन्ते चैवं तत्र प्रवादाः–'पदस्थध्यानबलेन श्रीजिनदत्तसूरिभिर्युगप्रधानगुरुभिः क्षेत्राधीशाद्या अत्युग्रा अपि सुरा वशं निन्यिरे, त्रिकोटीह्रींकार-जपस्तैश्चक्रे, ततः सुराः सर्वे प्रह्वीभूता'इत्युक्तेः, एवञ्च श्रीजिनशासनप्रभावनार्थं देवानां वशीकरणे न मिथ्यात्वं सम्भाव्यते, तथा हेमाचार्य-प्रबन्धे–"अन्यदाऽम्बडेनोदयनश्रेयसे भृगुकच्छे 'शकुनिकाविहारे' उद्धृते श्रीहेमसूरिपार्श्वात्प्रतिष्ठापिते नृपे गुरौ पत्तनादिसङ्घेषु च स्वस्थानं

प्राप्तेषु भृगुपुरस्थस्याम्बडस्य विषमो देवीदोषोऽभूत्, तत्परिचारकैः सद्यः श्रीसूरेस्तत्स्वरूपविज्ञप्तिलेखः प्रहितः, तत्स्वरूपं ज्ञात्वा यश-
श्चन्द्रगणिना सहाचार्याः प्रदोषे खगत्या भृगुपुरं प्राप्ताः, प्रतिष्ठासमये भोगबल्याद्यदानरुष्टाः सैन्धवादिदेव्योऽनुनेतुं कायोत्सर्गस्थान् गुरूँस्ता-
भिर्देवीभिरवगणनास्पदं नीयमानान् दृष्ट्वा यशश्चन्द्रगणीरुदूखले शालितण्डुलान् क्षिप्त्वा प्रहारान् ददौ, आद्यप्रहारे देवीप्रासादकम्पः,
द्वितीयप्रहारे देवीमूर्तय एव स्वस्थानादुत्पत्य 'वज्रपाणे! वज्रप्रहारेभ्यो रक्ष रक्षे'त्युच्चरन्त्यो गुरोश्चरणयोः पेतुः, अम्बडो निरुक् जातः"
तथा "एकदा श्रीगुरुभिः श्रीसिद्धचक्रमन्त्रः साम्नायः समुपदिष्टः, स च पद्मिनीकृतोत्तरसाधकत्वेन विविधविधिपूर्वं त्रिभिरपि साधितः,
तस्याधिष्ठाता श्रीविमलेश्वरनामादेवः प्रत्यक्षीभूयोवाच-'स्वेप्सितं वरं वृणु' ततः श्रीहेमसूरिणा राजप्रतिबोधः देवेन्द्रसूरिणा कान्तिनगर्याः
प्रासाद एकरात्रे ध्यानबलेन सेरीसकग्रामे समानीतः, मलयगिरिणा सिद्धान्तवृत्तिकरणवर इति त्रयाणां वरं दत्त्वा देवः स्वस्थानमगात्"
एवं च जिनशासनोन्नत्यर्थं स्थाने स्थाने देवतासाधनं श्रूयते, यदि चैवं मिथ्यात्वं स्यात्तदा सर्वेऽपि भवदुक्त्या मिथ्यात्वभाजो भवेयुः,
अन्यच्च श्रीज्ञाताङ्गे प्रथमज्ञाते (७ पत्रे) सुधर्मस्वामिवर्णनाधिकारे "विज्जापहाणा मंतप्पहाणा" इति पाठव्याख्यायां "विद्याः-प्रज्ञप्त्यादि-
देवताऽधिष्ठिता वर्णानुपूर्व्यः, मन्त्रा-हरिणेगमेष्यादिदेवताऽधिष्ठितास्ता एव, अथवा विद्याः ससाधनाः साधनरहिता मन्त्रा इति"
तत्साधनेनैव तत्प्रधानत्वमाकलनीयं, इदमपि स्मृतिप्रमोषपदे तवापतितं, तथा 'पञ्चनदीसाधन'मित्युक्तं तदेवावैयाकरणत्वं तव स्फुटयति,
कथं? "नदीभिश्च (२।१।२०)" इत्यत्र पाणिनिसूत्रे "नदीभिः (सह) संख्यासमस्यते, सोऽव्ययीभावः, समाहारे चायमिष्यते, सप्तगङ्गं
द्वियमुनं पञ्चनदं सप्तगोदावर"मित्यादिकथनात् 'पञ्चनदसाधन'मिति स्यात्, तत्र पञ्चनदसाधनमिति कोऽर्थः?, तदधिष्ठात्र्यः पञ्च-
देवता वर्तन्ते तासामवग्रहयाचनमकृत्वा कथं पुनस्तदुपकण्ठक्षेत्रेषु यतिना विहर्तव्यं?, इति व्याख्यातराऽवग्रहयाचनवत्तदवग्रहयाचनं प्रति-

पादितमस्ति, यदीदं मिथ्यात्वं तदा क्षेत्रदेवताकायोत्सर्गोऽपि तवाकर्त्तव्यः स्याद् भ्रान्त्या मिथ्यात्वभीरोः, क्रियते च क्षेत्रदेवताकायोत्सर्गः, तथाचोक्तं 'हेतुगर्भे' तपागच्छपतिजयचन्द्रसूरिकृते. "ननु श्रुतक्षेत्रदेवतादीनां कायोत्सर्गकरणं न युक्तं, मिथ्यात्वप्रसक्तेः, नैवं–पूर्वधरादि कालेऽपि एतत्कायोत्सर्गस्य क्रियमाणत्वेन सम्भाव्यमानत्वात्, यतः–'आवस्सयलहुगुरु, विचित्तुन्निभासेसु परिक्खयाईसु। पवयणसारुद्धारे, सुयदेवयमाइउस्सग्गो।१।' तथा 'प्रणिपत्य जिनवरेन्द्रं, वीरं श्रुतदेवतां गुरून् साधून्। आवश्यकस्य विवृत्तिं, गुरूपदेशादहं वक्ष्ये।१।' इति श्रीआवश्यकबृहद्वृत्तौ श्रीहरिभद्रसूरिकृतो नमस्कारः, 'आयरणा सुयदेवयमाईणं होइ उस्सग्गो' इति पञ्चवस्तुके, श्रीवीरनिर्वाणाद्वर्ष सहस्रे पूर्वश्रुतं व्यवच्छिन्नं, श्रीहरिभद्रसूरयस्तदनु पञ्चपञ्चाशता वर्षैर्दिवङ्गताः, ग्रन्थकरणकालाच्चाचरणायाः पूर्वमेव सम्भवात् श्रुतदेवताऽऽदि-कायोत्सर्गः पूर्वधरकालेऽपि सम्भवति, अतो युज्यते कर्त्तुं" तथा तत्रैव पुनरुक्तं "ननु श्रुतरूपदेवतायाः श्रुतसमृद्ध्यर्थं युक्तः कायोत्सर्गः, श्रुतभक्तेर्ज्ञानावरणादिकर्मक्षपणद्वाराश्रुतसमृद्धिहेतुत्वेन सुप्रतीतत्वात्, श्रुताधिष्ठातृदेवतायास्तु व्यन्तरादिप्रकाराया न युक्तः, तस्याः परकर्मक्ष-पणेऽसमर्थत्वेन श्रुतसमृद्ध्यहेतुत्वात्, श्रुतरूपदेवतायास्तु तृतीयकायोत्सर्गे स्मृतिः कृतैव ?, तन्न–श्रुताधिष्ठातृदेवतागोचरशुभप्रणिधानस्यापि स्मर्त्तुः कर्मक्षयहेतुत्वेनाभिहितत्वात्, तदुक्तं 'सुयदेवयाइ जीए, संभरणं कम्मक्खयकरं भणिअं। नत्थित्ति अकज्जकरी व, एवमासायणा तीए।१।' एवञ्च क्षेत्रदेवताऽपि स्मृतिमर्हति, यस्याः क्षेत्रस्थितैर्विधीयते (साध्वादिभिः स्वक्रियाऽनुष्ठानं), ततस्तस्याः कायोत्सर्गानन्तरं स्तुतिं भणति, यच्च प्रत्यहं क्षेत्रदेवतायाः स्मरणं तत्तृतीयव्रतेऽभीक्ष्णावग्रहयाचनरूपभावनायाः सत्यापनार्थं सम्भाव्यते" तेन पञ्चनदसाधनं क्षेत्रावग्रह-याचनरूपं बोधव्यं, संयमपालनमन्यथा न स्यात्, तदसाधने च तृतीयमहाव्रतमेव तैः खण्डितं स्यात्। अन्यच्च वस्त्रादिकं तेभ्यो दीयते तद्धि श्राद्धकृत्यं, प्रहृष्टैः शिष्टैः श्रावकैस्तदवग्रहयाचनात्ससुखं श्रीगुरूणां तत्र देशे विहारप्रवृत्तौ जातायां तासां देवतानामपि स्वसाधर्मिक-

त्वमिव मन्यमानैः पूजा क्रियते तदा साधूनां किमायातं ?, सम्प्रत्यपि साहिद्वारे भवद्गुरूणां साहिवादनसमये साहेर्मधुकरमकरमौक्तिक माल्यादिभिर्दस्यदीयैर्विने(नि)रे तदपि मिथ्यात्वं प्रसक्तं, यद्यच्चं मुखरीभूय प्रजल्पसि तत्तत्सर्वं त्वच्छिरसि एव निपततीति ।४।३।१६।

पज्जुसियविदलमाई–गहणम्मि न तस्स दोसपडिवत्ती[४-५] । दोसस्स वि पडिवत्ती, ससमणसमणी विहारम्मि[६] ।१७।

२७–"पर्युषितद्विदलादिग्रहणे तस्य दोषप्रतिपत्तिः-दोषाङ्गीकारो नास्ति, आदिशब्दात् पर्युषितपूपिकाऽऽदिग्रहणं" तदियता गुरोरशिक्षितनृत्यस्य कलापिन इव पश्चाद्भागप्रकटनरूपविगोपनं तव मातं, अत्र 'पर्युषितपूपिकादिग्रहण'मिति न घटते किन्तु ससम्यन्तत्वेनार्थघटना विधेयेति, पर्युषितद्विदलादिग्रहणे दोषाभावस्तु त्वत्पूर्वजैरेव स्वीचक्रे स्वस्थीभूय शृणु, श्राद्धविधिप्रकरणवृत्तौ विधिकौमुदीनाम्न्यां (मुद्रितायां १५८ पत्रे) चातुर्मासिकाभिग्रहाधिकारे श्रावकानधिकृत्य "पर्युषितद्विदलपूपिकापर्पटवटकादिशुष्कशाकतन्दुलीयकादिपत्रशाकटुम्परकखारिकीखर्जूरद्राक्षाखण्डशुण्ठ्यादीनां फुल्लिकुन्थ्वलिकादिसंसक्तिसम्भवात्त्यागः, औषधादि विशेषकार्ये तु सम्यक्शोधनादियतनयैव तेषां ग्रहण"मित्यादि, एतावता चतुर्मासके पर्युषितद्विदलादीनां निषेधं वदताऽऽचार्येण शीतकालादौ तदप्रतिषेधात्तद्ग्रहणं बलादापतितं, तथा श्रीसूत्रकृताङ्गे (३३३ पत्रे) क्रियास्थानकाधिकारे साधुवर्णके "अदुत्तरं च णं उक्खित्तचरगा × × अंतचरगा पंतचरगा × × अंताहारा पंताहारा अरसाहारा विरसाहारा लूहाहारा तुच्छाहारा अंतजीवा पंतजीवा" इत्यादि, तथा श्रीऔपपातिके च बाह्यतपोऽधिकारे "तेणं कालेणं"मित्यादि (३४ पत्रे) तावत् "अगिलायए" (३८ पत्रे), ततश्च "अरसाहारे विरसाहारे अंताहारे पंताहारे लूहाहारे से तं रसपरिच्चाए" इत्यादि, "व्याख्या–'अगिलायए'त्ति अन्नं–भोजनं विना ग्लायति अन्नग्लायकः, स चाभिग्रहविशेषात्प्रातरेव दोषान्न भोजीति" इत्यादि (३९ पत्रे), "अरसाहारे त्ति–'अरसो' हिङ्ग्वादिभिरसंस्कृत आहारो यस्य स, तथा 'विरसाहारे'त्ति विगत-

रसः-पुराणधान्यौदनादिः, 'अंताहारे'त्ति अन्ते भवमन्त्यं-जघन्यधान्यं वल्लादिः, 'पंताहारे'त्ति प्रकर्षेणान्त्यं वल्लाद्येव भुक्तावशेषं पर्युषितं वा" इति (४० पत्रे), पर्युषितवल्लग्रहणाभ्यनुज्ञानात्पर्युषितद्विदलग्रहणं जातमेव, तथा आचारांगचूर्णौ "भूचिते णाम कुसणिं तं असूचितं भत्तं, सीतपिंडो-वासी. तक्कूरो पुराणकुम्मासोवि पज्जुसियकुम्मासो अदु वक्कसं पुलागं वा लद्धे पिंडे अलद्धए दविए एकतो पुराण धण्णं वक्कसं पुराणसतुगा वा पुराणगोरसो वा पुराणगोधूममंडगो वा, पुलागं णाम अवयवो णिप्फावादि लद्धेवि पज्जसे, दवितो णाम न रागं गच्छति" इत्यादि, तथा आचाराङ्गे प्रथमश्रुतस्कन्धे नवमाध्ययने चतुर्थोद्देशके (३१४ पत्रे) "अविसूइयं वा सुक्कं, वा सीयं पिंडं पुराणकुम्मासं । अदुवुक्कसं पुलागं वा, लद्धे पिंडे अलद्धे दविए ।१३। व्याख्या-'सूइयं'ति दध्यादिना भक्तमार्द्रीकृतमपि तथाभूतं शुष्कं वा-वल्लचनकादि, शितपिण्डं वा-पर्युषितभक्तं, तथा 'पुराणकुल्माषं वा' बहुदिवससिद्धस्थितकुल्माषं, 'बुक्कसं'ति चिरन्तनधान्यौदनं यदि वा पुरातनसक्तुपिण्डं, बहुदिवससम्भृतगोरसं गोधूममण्डकं चेति, तथा 'पुलाकं' यवनिष्पावादि, तदेवम्भूतं पिण्डमवाप्य रागद्वेषविरहाद्द्रविको भगवान्, तथाऽन्यस्मिन्नपि पिण्डे लब्धेऽलब्धे वा द्रविक एव भगवान् इति, तथाहि-लब्धे पर्याप्ते शोभने वा नोत्कर्षं याति, नाप्य-लब्धेऽपर्याप्तेऽशोभने वाऽऽत्मानमाहारं दातारं वा जुगुप्सते" तथा श्रीआचाराङ्गे नवमाध्ययने(३१३ पत्रे) "अण्णगिलाइमेगया भुंजे" इति, "व्याख्या-'अण्णगिलाइं'ति पर्युषितं, तदेकदा भुक्तवानित्यर्थः" तथा श्रीभगवत्यां नवमशतके त्रयस्त्रिंशत्तमोद्देशके-"ततेणं तस्स जमालिस्स अणगारस्स तेहिं अरसेहि य विरसेहि य अंतेहि य पंतेहि य लूहेहि य तुच्छेहि य कालातिक्कंतेहि य पमाणातिक्कंतेहि य सीएहिं पाणभोय-णेहिं अन्नये"त्यादि, "व्याख्या-'अरसेहिय'त्ति हिंग्वादिभिरसंस्कृतत्वादविद्यमानरसैः 'विरसेहिय'त्ति पुराणत्वाद्विगतरसैः 'अंतेहिय'त्ति अरसतया सर्वधान्यांतवर्त्तिभिर्वल्लचनकादिभिः 'पंतेहि य'त्ति तैरेव भुक्तावशेषत्वेन पर्युषितत्वेन वा प्रकर्षेणान्तवर्तित्वात्प्रान्तैः" तथा श्री-

स्थानाङ्गे चतुर्थस्थानके द्वितीयोद्देशके (२१९ पत्रे) "चउविहे आहारे पन्नत्ते, तंजहा–उवक्खरसंपण्णे उवक्खडसंपण्णे सभावसंपण्णे परिजुसियसंपण्णे, व्याख्या–उपस्क्रियते अनेनेत्युपस्करो हिंग्वादिस्तेन सम्पन्नो युक्तः उपस्करसम्पन्नः, तथा उपस्करणमुपस्कृतं–पाक इत्यर्थः, तेन सम्पन्न ओदनमण्डकादिः उपस्कृतसम्पन्नः, पाठान्तरेण 'नोउवक्खरसंपन्ने' हिंग्वादिभिरसंस्कृत ओदनादिः, स्वभावेन–पाकं विना सम्पन्नः–सिद्धः द्राक्षादिः स्वभावसम्पन्नः, 'परिजुसिय'त्ति पर्युषितं–रात्रिपरिवसनं तेन सम्पन्नः पर्युषितसम्पन्नः इड्डरिकादिः, यतस्ताः पर्युषितकलनीकृताः अम्लरसा भवन्ति, आरनालस्थिताम्रफलादिर्वेति" तथा श्रीज्ञाताधर्मकथायां पञ्चमाध्ययने "तते णं तस्स सेलगस्स रायरिसिस्स तेहिं अंतेहि य पंतेहि य तुच्छेहि य" इत्यादि (१११ पत्रे) "व्याख्या–'अंतेहि ये'त्यादि–अन्तैर्वल्लचणकादिभिः, प्रान्तैस्तैरेव भुक्तावशेषैः पर्युषितैर्वा" इत्यादि (११३ पत्रे), ओघनिर्युक्तिसूत्रवृत्त्योः (मुद्रितायां ६७ पत्रे) "खित्तं तिहा करित्ता, दोसीणे नीणिअंमि उ वयंति। अन्नो लद्धो बहुओ, थोवं दे मा य रूसेज्जा।१४५। अहव न दोसीणं चिय, जायामो देहि दहि घयं खीरं। खीरे घयगुडपेज्जा, थोवं थोवं च सव्वत्थ।१४६। व्याख्या–'क्षेत्रं त्रिधा कृत्वा' त्रिभिर्भागैर्विभज्य एको विभागः प्रत्युषस्येव हिण्ड्यते, अपरो मध्याह्ने हिण्ड्यते, अपरो अपराह्ने, एवं ते भिक्षामटन्ति, 'दोसीणे निणियंमि उ वयंति' 'दोसीणे' पर्युषिते आहारे निस्सारिते सति वदन्ति–'अण्णो लद्धो बहुओ' अन्य आहारो लब्धः प्रचुरः, ततश्च 'थोवं दे'त्ति स्तोकं ददस्व–स्वल्पं प्रयच्छ 'मा य रूसेज्ज'त्ति मा वा रोषं ग्रहीष्यस्यनादरजनितं, एतच्चासौ परीक्षाऽर्थं करोति, किमयं लोको दानशीलो ? न वेति"। तथा तत्रैव "अंततं भोक्खामि त्ति, बेसए भुंजए य तहेव। एस ससारणिविट्ठो, ससारओ उट्ठिओ साहू।५७१। व्याख्या–इदानीं ससारः कदाचिद्भोजनार्थमुपविशन् भवति कदाचिदुपविष्टः कदाचिदुत्थितः, एतत्प्रदर्शनायाह–'अंततं' अन्त्यं–प्रत्यवरं वल्लचणकादि, तदप्यन्त्यं–पर्युषितं चणकादि अन्त्यमप्यन्त्यं अन्त्यान्त्यं भक्षयि-

उत्सूत्र-खण्डनम्

प्यामीत्येवंविधेन परिणामेनोपविष्टो मण्डल्यां भुङ्क्ते यस्तथैव एष साधुः शुभपरिणामत्वात्ससार उपविष्टः ससारश्चोत्थितः, तस्य शुभ-परिणामस्याप्रतिपतितत्वात् । एवमेव य भंगतिअं, जोएयव्वं तु सारनाणाई । तेण सहिओ ससारो, समुद्दवणिएण दिट्ठंतो ।५७२। व्याख्या-एवमेव भङ्गत्रितयं योजनीयं, तत्र प्रथमो भङ्गः ससारो निविट्ठो ससारो उट्ठिओ १, ससारो निविट्ठो असारो उट्ठिओ बितिओ भंगो २, असारो निविट्ठो ससारो उट्ठिओ तइओ ३, असारो निविट्ठो असारो उट्ठिओ एस चउत्थो ४, सारश्चात्र ज्ञानादिः, आदिग्रहणाद्दर्शनं चारित्रं चेति, तेन ज्ञानादिना सहितो यः साधुः स ससारो भण्यते" इत्यादि (मुद्रितोघनिर्युक्तौ १८८ पत्रे) ।४।४।

२८-तथा पर्युषितपूपिकानां निषेधस्तपागच्छनायकश्रीरत्नशेखरसूरिकृतायां 'विधिकौमुदी'नाम्न्यां श्राद्धविधिप्रकरणवृत्तौ न कृतः किन्तु पर्युषितद्विदलपूपिकानिषेधः, तत्पाठस्त्वयं (मुद्रितायां ४१ पत्रे) "पर्युषितद्विदलपूपिकादिकेवलजलराद्धकूरादिः, तथा अन्यदपि सर्वं कुथितान्नं पुष्पितौदनपक्वान्नादि चाभक्ष्यत्वेन वर्जनीयं" तन्निषेधश्चास्माभिरपि क्रियते, को नाम पर्युषितद्विदलपूपिका स्वीकारयति ?, एवं सर्वत्र सूत्रानुसारेण पर्युषितद्विदलग्रहणे साक्षात्स्फुरति सति यद्स्मान् पर्युषितद्विदलग्रहणेन दूषयसि आत्मानं च पर्युषितपूपिकाया अग्रहणेन दूषितमपि न लक्षयसि, अहो !! ते शुभदिनवैपरीत्यं रामोपस्थितौ दशाननवज्जज्ञे, यद्विद्यमानामपि शास्त्रपद्धतिं साक्षात्सुरसुन्दरीं मन्दोदरीमिवावगणय्याविद्यमानां वचनरचनां सतीं सीतामिव समीहसे ततस्त्वत्तः परः क उत्सूत्रभाषि ? इति विमृश ।४।५।

२९-"अपि-पुनर्दोषस्य प्रतिपत्तिरङ्गीकारोऽपि, क ? 'सश्रमणश्रमणीविहारे' ससाधुसाध्वीविहार इत्यर्थः, एवमुपलक्षणात्सांगरिकपुष्फुलादीनां द्विदलत्वेनोपदेशोऽपि वस्तुवितथभणनं ज्ञेयमिति, अत्र यद्यपि प्रागुक्तास्त्रयोऽपि प्रकाराश्चतुर्थेऽन्तर्भवन्ति, सर्वेषामपि वितथवस्तुप्ररूपणारूपत्वात्, तथापि क्रियाया आधिक्ये तावन्न कश्चिद्दोषः प्रत्युतागमत्वेति कस्यचिन्मुग्धस्य व्यामोहो भवति, तद्व्युदासार्थं भेदकथनं, तथा च न्यूनाधिक-

क्रिययोरुत्सूत्रत्वमाश्रित्य तुल्यतेति भावः" अत्रायं खण्डनप्रकारोऽखण्डरसेक्षुदण्डखण्डचर्वणादप्यतिमधुरताऽऽधारः, पूर्वं ताव(त्व)त्सूत्र-
क्रियोरेव तुल्यताऽऽविष्क्रियते—'दोषस्य प्रतिपत्ति'मिति पाठं प्रतिपद्यस्व, अथ साधुसाध्वीनां सहविहारनिकारप्रकाराः शक्रेणापि दुष्परिहारा
दर्श्यन्ते—"जे भिक्खू आगंतागारेसु जाव परियावहेसु वा ×× एगो एगित्थिए सद्धिं विहारं वा करेज्ज. सज्झायं वा करेज्ज. असणं
वा पाणं वा खाइमं वा साइमं वा आहारेज्ज. उच्चारं वा पासवणं वा परिट्ठवेति. अन्नयरं वा अणारियं निठुरं अस्समणपाओग्गं कहं
कहेइ कहेंतं वा सातिज्जति, तं सेवमाणे आवज्जइ चाउम्मासियं परिहारट्ठाणं अणुग्घाइयं" (इति)निशीथेऽष्टमोद्देशके, "उक्तः सप्तमः
इदानीमष्टमः तस्स इमो संबंधो कहितो—कहिया खलु आगारा, ते उ कहिं ? कतिविहा ? य विन्नेया । आगंतागारादीसुं, सविगार-
विहारमादीया ।१। सत्तमस्स अंतसुत्ते (इ)त्थी पुरिसागारा कहिता, ते कहिं हवेज्ज ?, आगंतागारादिसु, ते आगंतागारादी इहं समति
कतिविहा गामे आगारा निण्णेया ?, इह अपुव्वरूवियाणि—एगो साहू एगाए इत्थियाए सद्धिं समाणं गामाओ गामंतरं विहारो
अहवा गतागतं चंकमणं सज्झायं करेति असणादियं वा आहारेति उच्चारं पासवणं वा परिट्ठवेति, एगो एगित्थियाए सद्धिं वियारभूमिं
गच्छति अणारिया कामकहा णिरंतरं वा अप्पियं कहं कहेति काम निठुरकहाओ, एता चेव अस्समणपाउग्गा, अथवा देसभत्तकहादी
जा संजमोवकारिका ण भवति सा सव्वा अस्समणपाउग्गा । आगंतागारे आरा-मागारे कुलावसथे । पुरिसित्थिएगऽणेगे, चउक्कभयणा
दुपक्खेवि ।२। एगो एगित्थिए सद्धिं एगो अणेगित्थि(हिं)ए ? सद्धिं अणेगा एगित्थिए सद्धिं अणेगा अणेगित्थिहिं सद्धिं । जा
कामकहा सा उ होई, अणारिया लोइयंलोउत्तरिया । निठुरभल्लीकहणं, भागवयपदोसखामणया ।३। अवि गायरंपि सद्धिं, कहावि
एगाणियस्स पडिसिद्धा । किं पुण ? अणारियादी, तरुणित्थीणं सहगयस्स ।४। माइभगिणिमादीहिं अगम्मित्थीहिं सद्धिं एगाणियस्स

धम्मकहावि काउं ण वट्टति, किं पुण अण्णाहिं तरुणित्थीहिं सद्धिं ? । अण्णावि अप्पसत्थासु थीसु कहा किमुयऽणारिय असब्भ । चंकमणपाणभोयण, उच्चारेसु तु सविसेसो ।५। भयणपयाण चउण्हं, अण्णयजुत्ते य संजते संते । जे भिक्खू विहरेज्जा, अहवा वि करेज्ज सज्झायं ।६। भयणपदा चउब्भंगो पुव्वुत्तो । असणादि वाऽऽहारे, उच्चारि च आचरिज्जाहि । निठुरमसा(हु)जहुत्तं, अन्नयरकहं च जो कहइ ।७। सो आणा अणवत्थं, मिच्छत्तविराहणं तहा दुविहं । पावति जम्हा तेणं, एए पदा विवज्जेज्जा ।८। दिट्ठे संका भोइगादि, जम्हा एते दोसा तम्हा ण कप्पति विहाराइ काउं, कारणे पुण करेज्जा वि । वितियपदमणप्पज्झे, गेलण्णुवसग्गरोहद्धाणे । संभमभयवासासु य, खंतियमादीण निक्खमणे ।९। दारगाहा । अणवऽणप्पज्झो सो सव्वाणि विहारादीणि करेज्जा, इयाणिं गेलण्णे–उद्देसम्मि चउत्थे, गेलण्णे जो विही समक्खातो । सो चेव य वितीयपदे, गेलण्णे अट्ठमुद्देसे ।१०। कंठा । इयाणिं उवसग्गेत्ति, तत्थिमं उदाहरणं- कुलवंसंमि पहीणे, ससगभसगेहि होइ आहरणं । सुकुमालियपव्वज्जा, सपच्चवाया य फासेणं ।११।” इत्यादि निशीथ-भाष्यचूर्णोरष्टमोद्देशके, यत्र संयत्यो भवन्ति तत्र क्षेत्रेऽप्यनवस्थानं साधूनामास्तां विहारादि, तथाचोक्तं बृहत्कल्पभाष्यवृत्तिपु द्वितीय-खण्डे (प्रथमोद्देशके दशमसूत्रव्याख्याने) “से गामंसि वा जाव रायहाणिंसि वा एगवगडाए एगदुवाराए एगनिक्खमणपवेसाए नो कप्पइ निग्गंथाण य निग्गंथीण य एकतओ वत्थए, अथास्य सूत्रस्य कः सम्बन्ध ? इत्याह–गामनगराइएसुं तेसु अ खेत्तेसु कत्थ वसियव्वं ?, जत्थ न वसंति समणीमब्भासे निग्गमपहे वा, ग्रामनगरादिषु तेषु पूर्वसूत्रोक्तेषु क्षेत्रेषु कुत्र वस्तव्यमिति चिन्तायामनेन सूत्रेण प्रति-पाद्यते–‘दशाभ्यासे’ प्रतिश्रयासन्ने ‘निर्गमपथे वा’ निर्गमद्वारे श्रमण्यो न वसन्ति तत्र वस्तव्यमिति, × × जहा तस्स रायपुत्तस्स पेज्जेहिं अंगा अपत्थिच्चि काउं पडिसिद्धा, तहा भगवयावि साहूणं अब्बंभसेवा इह परत्थ य अपत्थियत्ति काउं पडिसिद्धा, तप्पडिहारिणो-

ताओ अ इत्थीपसुपंडगसंसत्ताए वसहीए संजइखेत्ते य ण ठायव्वं." एतावता साधुभिः साध्वीभिः सार्द्धं न विहर्त्तव्यं, ये च साध्वीभिः सार्द्धं विहारं न प्रतिषेधयन्ति प्रत्युत यैः कैश्चिदपि समं विहारं कारयन्ति ते किल सिद्धान्तोत्तीर्णं वदन्ति, यत्र क्षेत्रान्तरं नयन्ति साधवः साध्वीस्तत्राप्यमी नयन्ति, न परे, यदुक्तं–"पञ्चानामाचार्योपाध्यायप्रवर्त्तकस्थविरगणावच्छेदकानामेकतरः संयतीर्नयति, ताश्च स्त्रीसार्थेन समं संविग्नेन परिणतवयसा नेतव्याः" बृहत्कल्पभाष्ये चतुर्थोद्देशके गणधरस्यैव साध्वीनां क्षेत्रान्तरनयनेऽधिकारस्तत्प्रकारश्च निशीथभाष्यचूर्ण्योरष्टमोद्देशके प्रोक्तः–"जया खेत्ताओ खेत्तं संजतीतो संचारिज्जंति तदा णिब्भए निराबाहे साधू पुरओ ठिच्चा. ताओ य मग्गतो पट्ठिया आगच्छंति, भयाइकारणे पुण साधूणं पुरतो मग्गतो पस्सावपस्सियं वा समंतओ वा ठिया गच्छंति, णिप्पच्च० गाहा, संजतीणं संबंधिणो जे संजता तेहिं सहितो. गणधरो अप्पवितिओ अप्पतितिओ वा णिपच्चवाए णेति, सपच्चवाए सत्थेण सद्धिं णेति, जो वा संजतो सहस्सजोधाती सत्थे वा कयकरणो तेण सहितो णेति। उभयट्ठा० गाहा, एगे आयरिया भणंति–पुरतोवि ठिया संजतीतो गच्छंतु, किं कारणं ?, आह–काइयसण्णाणिवेट्ठसंजयं मा वइणीए लहिति सोवव्वइणि, तम्हा पुरतो गच्छंतु, तं ण जुज्जति, कम्हा ?, तासि अविणतो भण्णति लोगविरुद्धं च, तम्हा उभयं जयणाए करेज्जा, का जयणा ?, जत्थ एगो काइयसण्णं वोसिरति तत्थ सव्वे वि चिट्ठति, ततो (संजइओ) वि चिट्ठंते दट्ठुं मग्गतो चेव चिट्ठंति, ताओ वि पिट्ठतो सरीरचिंतं करेंति, एवं दोसा ण भवंति" ×× "साध्वीनां क्षेत्रान्तरनेता गणधरश्चेदृग्गिष्यते–पियधम्मे दढधम्मे, संविग्गोऽवज्जओयतेयस्सी। संगहुवग्गहकुसले, सुत्तऽत्थविऊ गणाहिवई ।१। (व्याख्या–) 'प्रिय' इष्टो 'धर्मः' श्रुतचारित्ररूपो यस्य स प्रियधर्मा, यस्तु तस्मिन्नेव धर्मे 'दृढो' द्रव्यक्षेत्राद्यापदुदयेऽपि निश्चलः स दृढधर्मा, राजदन्तादिवत् दृढशब्दस्य पूर्वनिपातः, संविग्नो द्विधा–द्रव्यतो भावतश्च, तत्र द्रव्यतो मृगः, सदैव त्रस्तमानसत्वात्, भावतो

यः संसारभयोद्विग्नः पूर्वरात्रापररात्रकाले सम्प्रेक्षते–किं मया कृतं ? किं वा शक्यमपि तपःकर्मादिकमहं न करोमि? इत्यादि, 'वज्जि'त्ति अकारप्रश्लेषादवद्यं-पापं, सूचनात्सूत्रमिति कृत्वा तद्भीरुरवद्यभीरुः, ओजस्तेजश्चोभयमपि वक्ष्यमाणलक्षणं, तद्विद्यते यस्य स ओजस्वी तेजस्वी चेति, 'संग्रहो' द्रव्यतो वस्त्रादिभिर्भावतः सूत्रार्थाभ्यां, 'उपग्रहो' द्रव्यत औषधादिभिर्भावतो ज्ञानादिभिरेतयोः संयतीविषययोः सङ्ग्रहोपग्रहयोः कुशलः, तथा 'सूत्रार्थविदू' गीतार्थः, एवंविधो गणाधिपतिरार्यिकाणां गणधरः स्थापनीयः । अथौजस्वीति व्याचष्टे–आरोह-परीणाहो, चियमंसो इंदिया य पडिपुण्णो । अह ओओ तेओ पुण, होइ अणोतप्पणा देहे ।२। (व्याख्या–) 'आरोहो' नाम शरीरेण नातिदैर्घ्यं नातिह्रस्वता, 'परिणाहो' नातिस्थौल्यं नातिदुर्बलता, अथवा 'आरोहः' शरीरोच्छ्रयः 'परिणाहो' बाह्वोर्विष्कम्भ एतौ द्वावपि तुल्यौ. न हीनाधिकप्रमाणौ, 'चियमंसो'त्ति भावप्रधाननिर्देशस्य चितमांसत्वं नाम वपुषि पांशुलिका न विलोक्यन्ते, तथा इन्द्रियाणि च प्रतिपूर्णानि–न चक्षुश्श्रोत्रावयवविकलतेति भावः, अथैतदारोहादिकमोज उच्यते. तद्यस्यास्ति स ओजस्वी, तेजः पुनर्देहे–शरीरे 'अनपत्रपता' अलज्जनीयता दीप्तिमत्त्वेनापरिभूतत्वं. तद्विद्यते यस्य स तेजस्वी, गतं गणधरप्ररूपणा द्वारं । अथ संयती गच्छस्यानयनमिति द्वारमाह–पडिलेहियं च खित्तं, संजईवग्गस्स आणणा होइ । निक्कारणम्मि मग्गतो, कारणे समगं व पुरतो वा ।३। (व्याख्या–) पूर्वं च वसतिविचारभूम्यादिविधिना प्रत्युपेक्षितं न संयतीप्रायोग्यं क्षेत्रं, ततः संयतीवर्गस्यानयनं तत्र क्षेत्रे भवति, कथं ? इत्याह–'निष्कारणे' निर्भये निराबाधे वा सति साधवः पुरतः स्थिताः संयत्यस्तु 'मार्गतः' पृष्ठतः स्थिता गच्छन्ति, कारणे तु 'समकं वा' साधूनां पार्श्वतः 'पुरतो वा' साधूनामग्रतः स्थिताः संयत्यो गच्छन्ति । निप्पच्चवायसंबंधि, भाविए गणहरऽप्पविइतइयो । नेइ भए पुण सत्थेण, सद्धिं कयकरणसहितो वा ।४। (व्याख्या–) निष्प्रत्यपाये संयतीनां ये 'सम्बन्धिनः' स्वज्ञातीयाः 'भाविता'श्च सम्यक्परिणतजिनवचना निर्विकाराः

संयतास्तैः सहितः गणधरः आत्मद्वितीय आत्मतृतीयो वा संयतीर्विवक्षितक्षेत्रं नयति, अथ स्तेनादिभयं वर्त्तते ततः सार्थेन सार्द्धं नयति, यो वा संयतः 'कृतकरणः' इषुशास्त्रे कृताभ्यासस्तेन सहितः संयतीस्तत्र नयति, स च गणधरः स्वयं पुरतः स्थितो गच्छति संयत्यस्तु मार्गतः स्थिता, अत्रैवं मतान्तरमुपन्यस्य दूषयन्नाह" इत्यादि, तथा यतिजीत(कल्प)बृहद्वृत्तौ "आचार्यः संयतीवर्त्तापकः प्रथमभङ्गत्रयेऽनुज्ञातो, न शेषभङ्गत्रयवर्ती, ते चामी भङ्गाः–सहिष्णुरपि भीतपरिषदपि १, सहिष्णुर्न भीतपरिषत् २, असहिष्णुः परं भीतपरिषत् ३, असहिष्णुरभीतपरिषच्च ४, तत्रेन्द्रियनिग्रहसमर्थः संयतीप्रायोग्यक्षेत्रवस्त्रपात्रादीनामुत्पादनायां प्रभविष्णुः सहिष्णुरुच्यते, यस्य तु सर्वोऽपि साधुसाध्वीवर्गो भयान्न कामप्यक्रियां करोति स भीतपरिषत्, तत्र प्रथमभङ्गे वर्त्तमानः संयतीपरिवर्त्तने समुचितः, शेषेषु त्रिषु भङ्गेषु वर्त्तमानो नानुज्ञातः, यदि परिवर्त्तयति तदा चतुर्गुरुकाः, यतो द्वितीयभङ्गे आत्मना सहिष्णुः परमभीतपरिषत्तया स्वच्छन्दप्रचाराः सत्यो यत्किमपि ताः करिष्यन्ति तत्सर्वमयमेव प्राप्नोति, तृतीयभङ्गे तु स्वयमसहिष्णुतया तासामङ्गप्रत्यङ्गादीनि दृष्ट्वा यदाचरति तन्निष्पन्नं (दोषमवाप्नोति); चतुर्थभङ्गे द्वितीयतृतीयभङ्गदोषानवाप्नोति, प्रथमभङ्गवर्त्तिनश्चाचार्यस्य यथावत्संयतीपरिवर्त्तने अतिमहती कर्मनिर्जरेति" तथाऽऽचार्योपाध्यायानां तन्नयनसंवादकं श्रीआचाराङ्गसूत्रं, तथाहि–"से भिक्खु वा भिक्खुणी वा आयरियउवज्झाएहिं सद्धिं दूइज्जमाणे नो आयरियउवज्झायस्स हत्थेणं हत्थं, जाव अणासायमाणे आयरियउवज्झाएहिं सद्धिं जाव दूइज्जेज्ज वा" इत्यादि (३८३ पत्रे), तथा श्रीनिशीथेऽपि (अष्टमोद्देशके ४६ पत्रे) साध्वीभिः समं साधूनां विहारः प्रतिषिद्धस्तथाहि–"जे भिक्खु सगणच्चियाए परगणच्चियाए निग्गंथीए समं गामाणुगामं दूइज्जमाणे पुरओ गच्छमाणे पिट्ठओ रीयमाणे ओहयमणसंकप्पे चिंतासोकसागरं संपविट्ठे करयलपल्हत्थमुहे अट्टझाणोवगए विहारं करेइ जाव करेंतं वा सातिज्जति, जाव तं सेवमाणे आवज्जति चाउम्मासियं

परिहारट्ठाणं अणुग्घाइयं" तथा लोकविरुद्धश्चायं सहविहारः, ये केऽपि पश्यन्ति तेऽपि निन्दन्त्यहो ब्रह्मचर्यधारिणोऽमी !!, योगी-योगिनीद्वये वनिताभिर्विरहिता दिनमपि स्थातुं न शक्नुवन्तीति, अपरञ्च तेषामपि मध्ये केचिद्भुक्तभोगाः केचिदभुक्तभोगाः केचिद्युवानस्त-त्तेषां ताः दृष्ट्वा कथं चतोवृत्तौ कलाकेलिकेलयो जलधिजलवेला इव प्रसरन्त्यो वार्यन्ते ?, न च सर्वेऽपि श्रीस्थूलभद्रस्वामिसधर्माणः सन्ति, तत्समयेऽपि तत्समतां न केऽपि लेभिरे, ततः सम्प्रति तथाविधाः कथं भवेयुः ?, ततस्तासां सङ्गतिरेवासङ्गतौतोरिवाखूनां, येषां पुनः पवित्रचारित्रपालनापेक्षा नास्ति ते सहविहारविचारं विदधतां, एवं विहरद्भिस्तैरुभयपक्षविनाशोऽपि नापेक्षितोऽन्यथा त्वेकपक्ष एव दोषपोषो भवत्यन्यत्र तु पक्षेऽक्षतशीलत्वमिति लाभोऽपि गवेष्यस्तेन, एवं विचार्यैवास्मद्गुरुभिः साधुसाध्वीसहविहारः प्रत्यषेधीति, न चापगुणाभाव एव, किन्तु गुणा अपि, एतावता सहविहारे मैथुनप्रतिसेवावन्निषेध एव श्रेयान्नात्रापवादः, क्षेत्रान्तरनयनं तु पूर्वोक्ता-नामाचार्यादीनामन्यतरस्यैव, न सामान्यसाधूनामिति, तदेवं सिद्धान्तपक्षमभ्युपगच्छन्नपि तं वचनैरेव निराकुर्वन्नूनं कुलीनताऽभिमानिनो मानवस्य स्वजननीमाजन्मतोऽप्यसतीमाचक्षाणस्य वृत्तमनुकुरुषे, तस्मात् रहस्यवस्थाय रहस्यमिदमक्षिणि निमील्य बुद्धिदृशमुन्मील्य मध्यस्थवृत्त्या युक्त्यनुसारैकप्रवृत्त्या विमृश्यमवश्यं ।४६।

३०—तथा "सांगरिकवुच्चुल्लादीनां द्विदलत्वेनोपदेशोऽपि वस्तुवितथभणनं" इदमपि प्रमादात्त्वयाऽलेखि, पूर्वं 'सांगरिके'त्यपशब्दः, "फले तस्यास्तु सङ्गर"मिति 'निघण्टुशेषे' प्रोक्तत्वात् सर्वत्र तथा संवादाच्च, अथ सङ्गरकादीनां द्विदलत्वं दर्शयामस्तथाहि 'चैत्यवन्दनकुलके' "संगरहलिमुग्गमुहुट्ठ, मासकंडुयपमुक्खवियलाइं । सहगोरसेण न जिमे, एयं रायच्चियं न करे ।१८। जम्मि य पीलिज्जंते, मणयंपि न नेहनिग्गमो हुज्जा । दुन्नि य दलाइ दीसंति, मित्थगाईण जह लोए ।१९।" तथा "दहिए विगइगयाइं, घोलवडा घोलसिहरणि करंबो ।

लवणकणदहियमहियं, संगरगायम्मि अप्पडिए ।१।" इति 'प्रवचनसारोद्धार'गाथाद्वितीयार्द्धं व्याख्यानयद्भिः श्रीआनन्दसूरिभिः स्ववृत्तावुक्तं. "लवणकणै—र्जीरकलवणलेशैर्युक्तं दधि हस्तेन मथितं वस्त्रेण गालितं तदपि रात्र्युषितं सत्कल्पते निर्विकृतिकप्रत्याख्यानवतां, क्वापि देशे सङ्गरकाद्यपि तत्र प्रक्षिप्यत इत्याशंक्याह—परं सङ्गरकादावपतिते सति, तत्र तु द्विदलदोषसम्भवान्न कल्पत इत्यर्थः" तथा (संदेहदोलावल्यां १११ पृष्ठे) "जह किर चवलयचणया, विदलं तह संगरा वि विदलं ति। दिणचरिया नवपयपय—रणेसु लिहिया उ फलिवग्गे ।१३८। (व्याख्या लघुवृत्तौ—) यथा किल चपलकचणका धान्यविशेषा महावृक्षद्विदलत्वाद् द्विदलं तथा 'सङ्गराण्यपि' शमीतरुफलिका अपि द्विदलं, सङ्गरशब्दस्य पुंस्त्वं प्राकृतत्वात्, इति कारणाद्दिनचर्यानवपदप्रकरणयोर्लिखिता—बहुश्रुतैरुपन्यस्ताः फलिकावर्गे, तथाहि दिनचर्यायां—'फलिवग्गे तह संगर, वल्ला चणया य होला य' इति, नवपदप्रकरणे तु फक्कसूरिकृते न दृश्यते, परं पूज्योक्तत्वात्तद्वृत्तौ क्वापि तत्रैव. वाऽन्यश्रुतधरकृते लिखिता भविष्यन्तीति स्वयं परिभाव्याः, फलिकाश्च प्रायो द्विदला एव भवन्तीति भावः। अथ सङ्गराणामेव द्विदलत्वसमर्थनार्थं लक्षणसद्भावमुद्भावयति—"न य संगरबीयाओ, तिल्लुप्पत्ती कयाइवि संभवइ। दलिए दुन्नि दलाइं, मुग्गाईणं व दीसंति।१३९।" तथा श्रीजिनपतिसूरिभिरूचे "संगरकंडयगोयाराइ विदलं" तथा श्रीजिनदत्तसूरिभिरप्युक्तं "कंडुअसंगरियाओ, न हुंति विदलं" इत्युत्सूत्रं ।४।७।१७।

एवं चामुंडियमय, उस्सुत्तं दंसियं मए चउहा। लहिऊणं गुरुवयणं, तुरिअं निअबोहणऽट्ठाए ।१८।

"एवं-प्रागुक्तप्रकारेण 'चामुण्डिकमतोत्सूत्रं' खरतरमतोत्सूत्रं 'गुरुवचनं' श्रीविजयदानसूरीश्वरवचनं 'लब्ध्वा' अवाप्य 'मया' धर्मसागरेण दर्शितं, किमर्थं?—'त्वरितं' शीघ्रं 'निजबोधनार्थं' आत्मज्ञानार्थमिति" अत्र त्वरितं यदुत्सूत्रवचनं दर्शितं तदेव तवाविमर्शकारित्वं

द्योतयति, यो ह्यसमीक्षितकारी स एव त्वरितं ब्रूते, तदुपदेशस्वीकाराच्च स्वगुरुरपि त्वया पामनेनोष्ट्रेणेव दूषितः, तेनापि न साधु चक्रे. यद्भवानेवंविधं प्रलपन् न न्यवारीति, अन्यच्च 'चामुंडियमये'त्यत्र "यमुना चामुण्डा कामुकाऽतिमुक्तके मोऽनुनासिकश्चे"ति प्राकृतसूत्रेण मस्य लुग्भवति, लुकि च सति मस्य स्थानेऽनुनासिको भवति, तेन 'चाउंडियमये'ति भवति, एवं 'चामुंडाइ' इति प्रागुक्त-पोडश्यां गाथायामप्ययमेवाऽपशब्दो बोधव्यः, तदेवमसत्प्रदुदितोत्सूत्रपदेषु कियन्तो दोषा आविर्भाव्यन्ते ?, दधिमाषभोजने कियन्तः कृष्णा विविच्यन्ते ?, परमियत्याप्युत्तरवचनरचनया प्रतिहतो बहुमुग्धजनध्याऽऽन्ध्यमुत्पादयन्नुच्छृङ्खलप्रवृत्तिको निखिलखलशेखरो भवान् पूर्वेवन्मा भवत्विति व्यवसितमथोपरम्यते एतदीयवाक्यविस्तरात् । १८ ।

प्रशस्तिः-विक्रमतः शररसरस-शशि(१६६५)वर्षे लब्धसम्पदुत्कर्षे । विजयिनि यामहीभुजि, नीतिपथानीतपुष्टदुष्टजने ।१। प्रवरे श्रीनरनगरे, श्रीजिनकुशलप्रभावलक्ष्मीधरे । श्रीमत्खरतरगच्छे, विष्णुपदी¹सलिलवत्स्वच्छे ।२। श्रीमत्साहिनरेन्द्रचन्द्ररचितश्रीपादपद्मा-र्हणा-सम्भारे विजयिन्युदारचरिते सुधैर्विदग्धैर्नरैः । स्वाख्याते च युगप्रधानपदवीं बिभ्रत्युदारैर्गुणैः, श्रीमच्छ्रीजिनचन्द्रसूरिसवि-तर्युद्यत्तपोधुरे ।३। श्रीजिनसिंहगुरूणा-मादेशमवाप्य काप्यनिन्द्यफला । उत्सूत्रकालकूटे, धर्माब्धि²सरस्वदुद्भूते ।४। आगमविषापहारि, प्रवरमहामन्त्रसंस्मृतेः प्रसभं । निर्विषता वितेने, यथा न ³मोहस्ततो भवति ।५। श्रीजयसोमगुरूणां, कल्पतरूणां जयोरुफलदानात् । वाचकवरगुणविनयै-र्विशोध्यमऽथ मथितसंशयैरेतत् । खण्डनमथवा तेषा-मेषा चारुविचारप्रसर-प्रसयाच्च विचार्यं किल शिष्यैः ।६। विशसितिह मौढ्यात् ।७। केन मन्दाकिनीमन्दं, पावनायोपदिश्यते । अन्धकारच्छिदे भानुः, केन वा प्रार्थ्यतेऽन्वहम् ।८। स्वत एव

¹ "गङ्गा विष्णुपदी"त्यमरः ² सागरोद्भूते, अन्यस्यापि कालकूटस्य सागरोत्पन्नत्वादिति छायार्थः । ³ "मोहो मूर्च्छा विपर्ययः" इत्यनेकार्थः ।

तयोर्वृत्ति-रुपकारश्रिया यथा । तथैव शोधने तेषां, प्रवृत्तिर्न [1]नियोगजा ।९। कदाग्रहगृहीतानां, वितथोक्तौ गिरां गतिः, । अचारिता महादोष-पोषायाप्यदिरा[2]ऽवज्ञरेत् ।१०। नाना शास्त्राणि सुगुरो, ज्ञाननेत्रप्रदायिनः । वीक्ष्यास्माभिः समारब्धा, हेलया युक्तिकेलयः ।११। श्रीजिनदत्तगुरूणां, श्रीमज्जिनकुशलसूरिराजानां । प्रसरत्प्रतापवशतो-ऽभवत्सदयं सम्पदुत्कर्षः ।१२।

इति तपाधर्मसागरोपाध्यायविहितोत्सूत्रोद्घट्टनकुलकखण्डनं विरचयाञ्चक्रे श्रीमज्जिनसिंहसूरिवरोपदेशाच्छ्रीजयसोममहोपाध्यायशिष्य-वाचनाचार्य-श्रीगुणविनयैः श्रीनव्यनगरे श्रीरस्तु कल्याणमस्तु ॥ श्री श्री छ संवत् १६६५ वर्षे । श्रीजिनसिंहसूरिवरेभ्यः श्रीजयसोममहो-पाध्यायशिष्यवाचकश्रीगुणविनयैर्वाचनायोपदीचक्रे, वाच्यमाना शिष्यप्रशिष्यपरम्परया चिरं नन्दतादानन्ददायिनीयं प्रतिः। ग्रंथाग्रं ।१२५०।

ननु दशदिनादिमानमपि(सूतके)कुत्रापि प्रोक्तमस्ति ?, उच्यते-श्रीव्यवहारभाष्यवृत्तौ (पीठिकायां मुद्रितायां दशमपत्रे) श्रीमलयगिरि-भिर्दशदिनमानमुक्तमस्ति "जातसूतकं नाम जन्मानन्तरं दशाहानि यावत्, मृतकसूतकं नाम मृतानन्तरं दशदिवसान् यावत्" १। पुनरपि व्यवहारभाष्यवृत्तौ प्रथमोद्देशके (मुद्रिते दशमपत्रे) तथाहि-"लौकिकं द्विधा-इत्वरं १ यावत्कथिकं च २, तत्रेत्वरं यत्सूतकं मृतकादि(तद्) दशदिवसान् यावद्वर्ज्यते इति, यावत्कथिकं च वरुड-छिंपक-चर्मकार-डुंबादि, एते हि यावज्जीवं शिष्टैः सम्भोगादिना वर्ज्यन्ते इति" २। पुनर्निशीथचूर्णौ परिहारनिक्षेपाधिकारे-"लोइओ दुविहो-इत्तरिओ आवकहिओ अ, इत्तरिओ सूयगादिसु दसा(इ)दिवसपरिवज्जणं, आवकहिओ जहा-नट्ट-वरुड-छिंपग-चम्मार-डुंबा य, लोउ(त्तरोवि इ)त्तरिओ सेज्जादाणअभिगमसड्ढादि, आवकहिओ राइपिंडो इति" ३। तथा लौकिकमप्यत्रैवं तथाहि-"सूतकं वृद्धिहानिभ्यां, दिनानि त्रीणी द्वादश । प्रसूतिस्थाने मासैकं, वासराः पंचगोत्रिणां ।१। इत्यादि ।

[1] न प्रेरणा। [2] अपिन-वन्हिरपि 'अचारिते' जलस्नौरहि। दाहदोषाय भवेदिति।

भविकभावुकसङ्गमकारकं, सकलशास्त्रलताजलदायकम् । जलदवर्णधरं हरिणाङ्कितं, नमत पार्श्वजिनं तिमिरीस्थितम् ।१। प्रबल-मोहतमस्तपन[1]प्रभं, सुमतिचित्रशिखण्डिज[2]सन्निभम् । मदनपङ्ककदं सुगुणान्वितं, नमत० ।२। विदलिताशुभकर्ममतङ्गजं, प्रणमितेश्वर-मस्तपतङ्गजम् । नवकनिर्जरपङ्कजपत्रितं, नमत० ।३। अधरकान्तिविनिर्जितविद्रुमं[3], शमधरं शिवमार्गवरद्रुमम् । हरिवराशनसंस्थित[4]मऽर्चितं, नमत० ।४। श्रीमत्पार्श्वजिनेन्द्रमिन्दुसदृशाऽऽस्यं तापपापापहं, ऐक्ष्वाकान्वयनिर्मलाम्बुधिनिशानाथं नमस्याम्यहम् । देवेन्द्राऽमरमौलिमौलि-शिखरश्रेणिप्रकाशिक्रमं, कल्याणं 'जयसोम'सेवकमुनेः श्रीपार्श्वकल्पद्रुमम् ।५। इति श्रीतिमिरीग्रामस्थपार्श्वनाथस्तवनम् ।

देववंदन देवेंद्रे कर्युं, श्रीवीर विप्रकुले जाण । गर्भ पुरुषोत्तम शक्रस्तवे, न गर्भ नीच अकल्याण ।१। आषाढि सुदि छठे गर्भाधाने, सूरि हरिभद्र कल्याण । अभयदेवसूरि श्रेयः कह्युं, न विप्रकुले अकल्याण ।२। न आवे आव्या गोत्र कर्मथी, श्री वीर ब्राह्मणी कूख । अवतरिया क्षत्रिकुंडे प्रभु, त्रिशला राणीनी कूख ।३। ते आसोज वदि तेरसे, मान्युं त्रिशलाए कल्याण । फल वीरे विप्र नीच कुलथी, ते किम कहूं अकल्याण ? ।४। इंद्रे भद्रबाहुए कह्युं ए, श्रेय कल्याण फल जे । निंद्य अकल्याणकभूत किम ?, अहो जिनचंद्र वीर ते ।५।

श्रीवीरस्तवन–नारे वीर ! नहीं मानुं रे, नहीं मानुं नहीं मानुं रे । नहीं मानुं तारुं अकल्याण, प्रभु गर्भकल्याण प्रमाण ।१। नारे वीर ! नहीं मानुं रे, किम मानुं किम मानुं रे ? । प्रभु ! अकल्याणकभूत, जे गर्भापहार तात !, नारे वीर !० ।२। आषाढि सुदी छठी दिने रे, आव्या देवानंदा कूख रे । ते दिन गर्भाधाने कल्याण श्रेय, ए पंचाशक साख, नारे वीर !० ।३। आसोज वदी तेरस दिने रे, गर्भधारण त्रिशला कूख रे ! । इंद्रे श्रेय कल्याण माताए, मान्युं कल्पसूत्र मूल साख, नारे वीर !० ।४। जन्म दीक्षा केवल मोक्ष थयुं रे, कल्याण श्रेय छ ए जाण रे । अकल्याण गंध सूत्रे नहीं रे, जिनचंद्र वीर वखाण, नारे वीर !० ।५।

[1] सूर्य । [2] बृहस्पति । [3] प्रवालकं । [4] हरिवराशनः–सिंहासनस्तत्र स्थितं ।

थुइ–कल्याण ते श्रेय रूपे मानिया ए, माता वे कूखे महावीर तो, सर्व जिन जननी कूखे ए. आखुं कल्याण तिम धार तो ॥ भांखी जिन पडिमा पूजा ए, ऋतुवंती न पूजे देव तो। जिन पूजती ऋतुवंती थाय ए, पूजे न ते प्रभाविक देव तो ॥१॥

-स्तवन–चोमासुं सिद्धाचल करिये रे, मंदिर तलाटीये नित जइये रे। हांरे जिन दर्शनना द्वेषी न थइये, जातीडा! जिन दर्शन सुखकंदो रे। हांरे ए तो टाले भवनो फंदो, जातीडा! जिन दर्शन मत निंदो रे।१। अमे जयणाथी इहां जासुं रे, प्रभु आणा ते दिलमांहे धरसुं रे। हांरे तेथी आराधक अमे तरसुं, जातीडा! चोमासुं सिद्धाचळ करिये रे, मं०जा०जि० ।२। अमे जिन दर्शनना रंगी रे, ढुंढकना नहिं अमे संगी रे। हांरे किम थइये जिन दर्शनना भंगी?, जातीडा! चो०मं० ।३। वर्षाले गिरि मुनि जावे रे, कोश अढी श्रीवीर फरमावे रे। हांरे कल्पसूत्र विरुद्ध किम कहावे?, जातीडा! चो०मं०।४। सिद्धगिरि जिनदर्शन सारुं रे, ए तो लागे मुझ मन प्यारुं रे। हांरे जिन दर्शने जिनचंद्र तारु, जातीडा! चो०मं० ।५।

(थुइ) श्रीसिद्धाचले, आदि जिन आव्या, पूर्व नवाणु वार जी। अजित शांति, चोमासुं कीधुं, गणधर मुनि परिवार जी ॥ दर्शन पूजन, भविजन कीधुं, देशना अमृत पीधुं जी। चोमासे तलाटी देरे, जिन दर्शन पूजन, नर स्त्री किम निषेधुं जी? ॥१॥

श्रीवाचनाचार्यश्रीमद्गुणविनयगणिविरचितं

## धर्मसागरीय–उत्सूत्रखण्डनं समाप्तम्